हेरोद्पिलातयोः परस्परं वैरभाव आसीत् किन्तु तद्दिने द्वयोर्मेलनं
जातम्।

पश्चात् पिलातः प्रधानयाजकान् शासकान् लोकांश्च युगपदाहूय १३
बभाषे राज्यविपर्य्ययकारकोयम् इत्युक्त्वा मानुषमेनं मम निकटमानैष्ट १४
किन्तु पश्यत युष्माकं समक्षम् अस्य विचारं कृत्वापि प्रोक्तापवादानुरूपेणास्य
कोप्यपराधः सप्रमाणो न जातः; यूयञ्च हेरोदः सन्निधौ प्रेषिता मया १५
तत्रास्य कोप्यपराधस्तेनापि न प्राप्तः। पश्यतानेन बधार्हः कोप्यपराधो न १६
कृतः तस्मादेनं ताडयित्वा विहास्यामि। तत्रोत्सवे तेषामेको मोचयितव्यः। १७
इतिहेतोस्ते प्रोच्चैरेकदा प्रोचुः, एनं दूरीकृत्य बरब्बानामानं मोचय। स १८
बरब्बा नगर उपप्लवबधापराधाभ्यां कारायां बद्ध आसीत्। किन्तु पिलातो १९
यीशुं मोचयितुं वाञ्छन् पुनस्तानुवाच। तथाप्येनं क्रुशे विध क्रुशे २०
विधेति वदन्तस्ते रुरुवुः। ततः स तृतीयवारं जगाद कुतः? स किं कर्म्म २१
कृतवान्? नाहमस्य कमपि बधापराधं प्राप्तः केवलं ताडयित्वामुं त्यजामि २२
तथापि ते पुनरेनं क्रुशे विध इत्युक्त्वा प्रोच्चैर्दृढं प्रार्थयाञ्चक्रिरे। ततः प्रधान- २३
याजकादीनां कलरवे प्रबले सति तेषां प्रार्थनारूपं कर्त्तुं पिलात आदि- २४
देश। एवं राजद्रोहबधयोरपराधेन कारास्थं यं जनं ते ययाचिरे तं २५
मोचयित्वा यीशुं तेषामिच्छायां समार्पयत्।

अथ ते यीशुं गृहीत्वा यान्ति एतर्हि ग्रामादागतं शिमोननामानं २६
कुरीणीयं जनं धृत्वा यीशोः पश्चान्नेतुं तस्य स्कन्धे क्रुशमर्पयामासुः। ततो २७
लोकारण्यमध्ये बहुस्त्रियो रुदत्यो विलपन्त्यश्च यीशोः पश्चाद् ययुः।
किन्तु स व्याघुट्य ता उवाच हे यिरूशालमः कन्या यूयं मदर्थं न रुदित्वा २८
स्वार्थं स्वासामपत्यार्थञ्च रुदित; पश्यत याः कदापि गर्भवत्यो नाभवन् २९
स्तन्यञ्च नापाययन् तादृशी बन्ध्या यदा धन्या वक्ष्यन्ति स काल आयाति।
तदा हे शैला अस्माकमुपरि पतत हे उपशैला अस्मानाच्छादयत कथामी- ३०
दृशीं लोका वक्ष्यन्ति। यतः सतेजसि शाखिनि चेदेतद् घटते तर्हि ३१
शुष्कशाखिनि किं न घटिष्यते? तदा ते हन्तुं द्वावपराधिनौ तेन सार्द्धं निन्युः। ३२

३३　अपरं शिरःकपालनामकस्थानं प्राप्य तं क्रुशे विविधुः; एवं तद्द्वयोर-
३४ पराधिनोरेकं तस्य दक्षिणे तदन्यं वामे क्रुशे विविधुः। तदा यीशुरकथयत्
हे पितरेतान् क्षमस्व यत एते यत् कर्म्म कुर्व्वन्ति तन् न विदुः; पश्चात्ते
३५ गुटिकापातं कृत्वा तस्य वस्त्राणि विभज्य जगृहुः। तत्र लोकसंघस्तिष्ठन्
ददर्श; ते तेषां शासकाश्च तमुपहस्य जगदुः, एष इतरान् रक्षितवान् यदी-
३६ श्वरस्य मनोनीत अभिषिक्तो भवति तर्हि स्वमधुना रक्षतु। तदन्यः सेनागण
३७ एत्य तस्मै अम्लरसं दत्त्वा परिहस्य प्रोवाच चेत्त्वं यिहूदीयानां राजासि
३८ तर्हि स्वं रक्ष। एवमयं यिहूदीयानां राजेति वाक्यं यूनानीयरोमीय-
इब्रीयाक्षरै र्लिखितं तच्छिरस ऊर्द्ध्वेऽस्थाप्यत।

३९　तदोभयपार्श्वयो र्विद्धौ यावपराधिनौ तयोरेकस्तं विनिन्द्य बभाषे
४० चेत्त्वम् अभिषिक्तोसि तर्हि स्वमावाञ्च रक्ष। किन्त्वन्यस्तं तर्जयित्वा-
४१ वदद् ईश्वरात्तव किञ्चिदपि भयं नास्ति किं? त्वमपि समानदण्डोऽसि
योग्यपात्रे आवां स्वस्वकर्म्मणां समुचितफलं प्राप्नुवः किन्त्वयं मनुष्यः
४२ कञ्चनापराधं नाकरोत्। अथ स यीशुं जगाद हे प्रभो भवान् स्वराज्य
४३ प्रवेशकाले मां स्मरतु। तदा यीशुः कथितवान् त्वां यथार्थं वदामि
त्वमद्यैव मया सार्द्धं परलोकस्य सुखस्थानं प्राप्स्यसि।

४४　अपरञ्च द्वितीययामात् तृतीययामपर्य्यन्तं रवेस्तेजसोन्तर्हितत्वात्
४५ सर्व्वदेशोऽन्धकारेणावृतो मन्दिरस्य प्रतिसीरा च छिद्यमाना द्विधा
४६ बभूव। ततो यीशुरुच्चैरुवाच हे पित र्ममात्मानं तव करे समर्पये, इत्युक्त्वा
४७ स प्राणान् जहौ। तदैतां घटनां दृष्ट्वा शतसेनापतिरीश्वरं धन्यमुक्त्वा
४८ कथितवान् अयं नितान्तं साधुमनुष्य आसीत्। अथ यावन्तो लोका द्रष्टुम्
४९ आगतास्ते तां घटनां दृष्ट्वा वक्षःसु कराघातं कृत्वा व्याघुट्य गताः। एवं
यीशो र्ज्ञातयो या या योषितश्च गालीलस्तेन सार्द्धमायातास्तेऽपि दूरे
स्थित्वा तत् सर्व्वं ददृशुः।

५०　तदा यिहूदीयानां मन्त्रणां क्रियाञ्चासम्मन्यमान ईश्वरस्य राजत्वम्
५१ अपेक्षमाणो यिहूदिदेशीयो ऽरिमथीयनगरीयो यूषफ्नामा मन्त्री भद्रो

धार्म्मिकश्च पुमान् पिलातान्तिकं गत्वा यीशोर्देहं ययाचे। पश्चात् ५२
वपुरवरोह्य वाससा संवेश्य यत्र कमपि मानुषं नास्थापयत् तस्मिन् शैले ५३
खाते श्मशाने तदस्थापयत्। तद्दिनमायोजनीयं दिनं विश्रामवारश्च ५४
समीपः। अपरं यीशुना सार्द्धं गालील आगता योषितः पश्चादित्वा ५५
श्मशाने तत्र यथा वपुः स्थापितं तच्च दृष्ट्वा व्याघुट्य गत्वा सुगन्धिद्रव्य- ५६
तैलानि कृत्वा विधिवद् विश्रामवारे विश्रामं चक्रुः।

---

## २४ चतुर्विंशोऽध्यायः।

१ स्वर्गीयदूताभ्यां ख्रीष्टस्य श्मशानोत्थानप्रकाशः ९ स्त्रीभिः शिष्येभ्यस्तदुत्थानवार्त्ताकथनं १३ इम्मायुनगरगामिभ्यां शिष्याभ्यां ख्रीष्टदर्शनं ताभ्यां सह कथनञ्च ३३ यिरूशालमे परावृत्य सर्व्वेभ्यो वार्त्ताकथनञ्च ३६ शिष्यैः ख्रीष्टस्य दर्शनं तेन भोजनमुपदेशश्च ५० तस्य स्वर्गारोहणञ्च।

अथ सप्ताहप्रथमदिनेऽतिप्रत्यूषे ता योषितः सम्पादितं सुगन्धिद्रव्यं १
गृहीत्वा तदन्याभिः कियतीभिः स्त्रीभिः सह श्मशानं ययुः। किन्तु २
श्मशानद्वारात् पाषाणमपसारितं दृष्ट्वा ताः प्रविश्य प्रभोर्देहमप्राप्य ३
व्याकुला भवन्ति एतर्हि तेजोमयवस्त्रान्वितौ द्वौ पुरुषौ तासां समीपे ४
समुपस्थितौ तस्मात्ताः शङ्कायुक्ता भूमावधोमुख्यस्तस्थुः। तदा तौ ता ५
ऊचतुः मृतानां मध्ये जीवन्तं कुतो मृगयथ? सोत्र नास्ति स उदस्थात्। ६
पापिनां करेषु समर्पितेन क्रुशे हतेन च मनुष्यपुत्रेण तृतीयदिवसे श्मशाना- ७
दुत्थातव्यम् इतिकथां स गालीलि तिष्ठन् युष्मभ्यं कथितवान् तां स्मरत। ८
तदा तस्य सा कथा तासां मनःसु जाता।

अनन्तरं श्मशानाद् गत्वा ता एकादशशिष्यादिभ्यः सर्व्वेभ्यस्तां वार्त्तां ९
कथयामासुः। मग्दलिनी मरियम्, योहना, याकुबो माता मरियम् १०
तदन्याः सङ्गिन्यो योषितश्च प्रेरितेभ्य एताः सर्व्वा वार्त्ताः कथयामासुः
किन्तु तासां कथाम् अनर्थकाख्यानमात्रं बुद्ध्वा कोपि न प्रत्यैत्। तदा ११
पितर उत्थाय श्मशानान्तिकं धावन् ययौ तत्र प्रह्वो भूत्वा पार्श्वैकस्थापितं १२
केवलं वस्त्रं ददर्श तस्मादाश्चर्य्यं मन्यमानो यदघटत तन्मनसि विचारयन्
प्रतस्थे।

१३ तस्मिन्नेव दिने द्वौ शिष्यौ यिरूशालमो द्विक्रोशान्तरितम् इम्मायुग्रामं
१४ गच्छन्तौ तासां घटनानां कथां कथयन्तौ तयोरालापविचारयोः काले
१५ यीशुरागत्य ताभ्यां सह जगाम किन्तु यथा तौ तं न परिचिनुतस्तदर्थं
१६ तयोर्दृष्टिः संरुद्धा। स तौ पृष्टवान् युवां विषण्णौ किं विचारयन्तौ गच्छथः?
१७ ततस्तयोः क्लियपानामा प्रत्युवाच यिरूशालमपुरेऽधुना यान्यघटन्त त्वं
१८ केवलविदेशी किं तद्वृत्तान्तं न जानासि? स पप्रच्छ का घटनाः? तदा
१९ तौ वक्तुमारेभाते यीशुनामा यो नासरीयो भविष्यद्वादी ईश्वरस्य मानु-
२० षाणाञ्च साक्षात् वाक्ये कर्म्मणि च शक्तिमानासीत् तम् अस्माकं प्रधान-
याजका विचारकाश्च केनापि प्रकारेण क्रुशे विद्ध्वा तस्य प्राणाननाशयन्
२१ तदीया घटनाः। किन्तु य इस्रायेलीयलोकान् उद्धारयिष्यति स एवायम्
इत्याशास्माभिः कृता; तद्यथा तथास्तु तस्या घटनाया अद्य दिनत्रयं गतं।
२२ अधिकन्त्वस्माकं सङ्गिनीनां कियत्स्त्रीणां मुखेभ्योऽसम्भववाक्यमिदं श्रुतं
२३ ताः प्रत्यूषे श्मशानं गत्वा तत्र तस्य देहमप्राप्य व्याघुट्येत्वा प्रोक्तवत्यः
२४ स्वर्गीयदूतौ दृष्टौ अस्माभिस्तौ चावादिष्टां स जीवितवान्। ततोऽस्माकं
कैश्चित् श्मशानमगम्यत तेऽपि स्त्रीणां वाक्यानुरूपं दृष्टवन्तः किन्तु तं
२५ नापश्यन्। तदा स तावुवाच हे अबोधौ हे भविष्यद्वादिभिरुक्तवाक्यं
२६ प्रत्येतुं विलम्बमानौ एतत्सर्व्वदुःखं भुक्त्वा स्वभूतिप्राप्तिः किं ख्रीष्टस्य न न्याय्या?
२७ ततः स मूसादिसर्व्वभविष्यद्वादिनां ग्रन्थानारभ्य सर्व्वशास्त्रे स्वस्मिन्
२८ लिखिताख्यानाभिप्रायं बोधयामास। अथ गम्यग्रामाभ्यर्णं प्राप्य तेनाग्रे-
२९ गमनलक्षणे दर्शिते तौ साधयित्वा वदतां सहावाभ्यां तिष्ठ वेलावसन्ना
३० प्रायेण रात्रिरभूत्; ततः स ताभ्यां सार्द्धं स्थातुं गृहं ययौ। पश्चाद्भोज-
नोपवेशकाले स पूपं गृहीत्वा ईश्वरगुणान् जगाद तञ्च भंक्त्वा ताभ्यां ददौ।
३१ तदा तयोर्दृष्टौ प्रसन्नायां तौ तं प्रत्यभिजज्ञतुः किन्तु स तयोः साक्षादन्त-
३२ र्दधे। ततस्तौ मिथोभिधातुम् आरब्धवन्तौ गमनकाले यदा कथामकथ-
यत् शास्त्रार्थञ्चाबोधयत् तदावयो बुद्धिः किं न प्राज्वलत्?
३३ तौ तत्क्षणादुत्थाय यिरूशालमपुरं प्रत्याययतुः तत्स्थाने शिष्याणाम्

एकादशानां सङ्गिनाञ्च दर्शनं जातं ते प्रोचुः प्रभुरुदतिष्ठद् इति सत्यं ३४
शिमोने दर्शनं दत्तञ्च। ततः पथः सर्व्वघटनायाः पूपभञ्जनेन तत्परिचयस्य ३५
च सर्व्ववृत्तान्तं तौ वक्तुमारेभाते।

इत्थं ते परस्परं वदन्ति तत्काले यीशुः स्वयं तेषां मध्ये प्रोत्थाय ३६
युष्माकं कल्याणं भूयाद् इत्युवाच किन्तु भूतं पश्याम इत्यनुमाय ते समुद्वि- ३७
विजिरे त्रेषुश्च। स उवाच कुतो दुःखिता भवथ? युष्माकं मनःसु सन्देह ३८
उदेति च कुतः? एषोहं मम करौ च पश्यत वरं स्पृष्ट्वा पश्यत मां यादृशं ३९
पश्यथ तादृशानि भूतस्य मांसास्थीनि न सन्ति। इत्युक्त्वा स हस्तपादान् ४०
दर्शयामास। तेऽसम्भवं ज्ञात्वा सानन्दा न प्रत्ययन् ततः स तान् पप्रच्छ ४१
अत्र युष्माकं समीपे खाद्यं किञ्चिदस्ति? ततस्ते कियद्दग्धमत्स्यं मधु च ददुः ४२
स तदादाय तेषां साक्षात् बुभुजे कथयामास च मुसाव्यवस्थायां भविष्यद्वा- ४३
दिनां ग्रन्थेषु गीतपुस्तके च मयि यानि सर्व्वाणि वचनानि लिखितानि तद- ४४
नुरूपाणि घटिष्यन्ते युष्माभिः सार्द्धं स्थित्वाहं यदेतद्वाक्यम् अवदं तदिदानीं
प्रत्यक्षमभूत्। अथ तेभ्यः शास्त्रबोधाधिकारं दत्त्वावदत् ख्रीष्टेनेत्थं मृति- ४५
यातना भोक्तव्या तृतीयदिने च श्मशानादुत्थातव्यञ्चेति लिपिरस्ति; एवं ४६
तन्नाम्ना यिरूशालममारभ्य सर्व्वदेशे मनः परावर्त्तनस्य पापमोचनस्य च ४७
सुसंवादः प्रचारयितव्यः, एषु सर्व्वेषु यूयं साक्षिणः। अपरञ्च पश्यत पित्रा ४८
यत् प्रतिज्ञातं तत् प्रेषयिष्यामि, अतएव यावत्कालं यूयं स्वर्गीयां शक्तिं ४९
न प्राप्स्यथ तावत्कालं यिरूशालम्नगरे तिष्ठत।

अथ स तान् वैथनीयापर्य्यन्तं नीत्वा हस्तावुत्तोल्य आशिषं वक्तुमारेभे ५०
एवमाशिषं वदन्नेव तेभ्यः पृथग्भूत्वा स्वर्गाय नीतोभवत्। तदा ते तं ५१
भजमाना महानन्देन यिरूशालमं प्रत्याजग्मुः ततो निरन्तरं मन्दिरे ५२
तिष्ठन्त ईश्वरस्य प्रशंसां धन्यवादञ्च कर्त्तुम् आरेभिरे। इति। ५३

# योहन् लिखितः सुसंवादः।

## १ प्रथमोऽध्यायः।

१ ख्रीष्टस्य ईश्वरत्वस्य कथा ६ ईश्वरेण योहनः प्रेरणं १४ ख्रीष्टावतारकथा १९ तस्मिन् योहनः साक्ष्यदानं २९ ख्रीष्टस्य प्राधान्यस्य कथा ३५ शिमोन्थान्द्रिययोः कथा ४३ नियनियेल्नि कथा च।

१ आदौ वाद आसीत् स च वाद ईश्वरेण सार्द्धमासीत् स वादः
२ स्वयमीश्वर एव। स आदाव् ईश्वरेण सहासीत्। तेन सर्व्वं वस्तु ससृजे
३ सर्व्वेषु सृष्टवस्तुषु किमपि वस्तु तेनासृष्टं नास्ति। स जीवनस्याकरः
४ तच्च जीवनं मनुष्याणां ज्योतिः; तज्ज्योतिरन्धकारे प्रचकाशे किन्त्वन्ध-
५ कारस्तन्न जग्राह।
६ योहन्नामक एको मनुज ईश्वरेण प्रेषयाञ्चक्रे। तद्द्वारा यथा सर्व्वे
७ विश्वसन्ति तदर्थं स तज्ज्योतिषि प्रमाणं दातुं साक्षिस्वरूपो भूत्वागमत्।
८ स स्वयं तज्ज्योति र्न किन्तु तज्ज्योतिषि प्रमाणं दातुमागमत्। य
९ आगत्य जगति सर्व्वमनुष्येभ्यो दीप्तिं ददाति तदेव सत्यज्योतिः। यो
१० जगदसृजत् तन्मध्यएव स आसीत् किन्तु जगतो लोकास्तं नाजानन्।
११ निजाधिकारम् स आगच्छत् किन्तु प्रजास्तं नागृह्लन्। तथापि ये ये
१२ तमगृह्लन् अर्थात् तस्य नाम्नि व्यश्वसन् तेभ्य ईश्वरस्य पुत्रा भवितुम्
१३ अधिकारम् अददात्। अपरं तेषां जनिः शोणितान्न शारीरिका-
भिलाषान्न मानवानाम् इच्छातो न किन्त्वीश्वरादभवत्।
१४ स वादो मनुष्यरूपेणावतीर्य्य सत्यतानुग्रहाभ्यां परिपूर्णः सन् सार्द्धम्
अस्माभि र्न्यवसत् ततः पितुरद्वितीयपुत्रस्य योग्यो यो महिमा तं महिमानं
१५ तस्यापश्याम। ततो योहनपि प्रचार्य्य साक्ष्यमिदं दत्तवान् यो मम पश्चाद्
आगमिष्यति स मत्तो गुरुतरः; यतो मत्पूर्व्वं स विद्यमान आसीत् यदर्थम्
१६ अहं साक्ष्यमिदम् अदां सएषः। अपरञ्च तस्य पूर्णताया वयं सर्व्वे क्रमशो-

नुग्रहं प्राप्ताः। मुसाद्वारा व्यवस्था दत्ता किन्त्वनुग्रहः सत्यत्वञ्च यीशुख्रीष्ट- १७
द्वारा समुपातिष्ठतां। अपरञ्च कोपि मनुज ईश्वरं कदापि नापश्यत् किन्तु १८
पितुः क्रोडस्थोऽद्वितीयः पुत्रस्तं प्राकाशयत्।

त्वं कः? इतिवाक्यं प्रष्टुं यदा यिहूदीयलोका याजकान् लेविलोकांश्च १९
यिरूशालमो योहनः समीपे प्रेषयामासुः। तदा स स्वीकृतवान् नापह्नुतवान् २०
नाहम् अभिषिक्त इत्यङ्गीकृतवान्। तदा तेऽपृच्छन् तर्हि को भवान्? किम् २१
एलियः? सोवदत् न। ततस्तेऽपृच्छन् तर्हि भवान् स भविष्यद्वादी? सोवदत्
नाहं सः। तदा तेऽपृच्छन् तर्हि भवान् कः? वयं गत्वा प्रेरकान् त्वयि किं २२
वक्ष्यामः? स्वस्मिन् किं वदसि? तदा सोवदत्

'परमेशस्य पन्थानं परिष्कुरुत सर्व्वतः। २३
प्रान्तरे वै त्विदं वाक्यं वदतः कस्यचिद्रवः।'

कथामिमां यस्मिन् यिशायियो भविष्यद्वादी लिखितवान् सोहम्। ये २४
प्रेषितास्ते फिरूशीलोकाः। तदा तेऽपृच्छन् यदि नाभिषिक्तोसि, एलि- २५
योसि न, स भविष्यद्वाद्यपि नासि च, तर्हि लोकान् मज्जयसि कुतः? ततो २६
योहन् प्रत्यवोचत् तोयेऽहं मज्जयामीति सत्यं किन्तु यं यूयं न जानीथ
तादृश एकोजनो युष्माकं मध्य उपतिष्ठति। स मत्पश्चाद् आगतोपि मत्पूर्व्वं २७
वर्त्तमान आसीत् तस्य पादुकाबन्धनं मोचयितुमपि नाहं योग्योस्मि।
यर्द्दननद्याः पारस्थवैथावरायां यस्मिन् स्थाने योहन् अमज्जयत् तस्मिन् २८
स्थाने सर्व्वमेतद् अघटत।

परेऽहनि योहन् स्वनिकटम् आगच्छन्तं यीशुं विलोक्य प्रावोचत् २९
जगतः पापमोचकम् ईश्वरस्य मेषशावकं पश्य। यो मम पश्चाद् ३०
आगमिष्यति स मत्तो गुरुतरः यतोहेतो मत्पूर्व्वं सोऽवर्त्तत यस्मिन्नहं
कथामिमां कथयामि स एवायं। अपरं नाहमेनं प्रत्यभिज्ञातवान् किन्तु ३१
इस्रायेल्लोका एनं यथा परिचिन्वन्ति तदभिप्रायेणाहं जले मज्जयितुं
आगच्छम्। पुनश्च योहन् अपरमेकं प्रमाणं दत्त्वा कथितवान् विहायसः ३२
कपोतवद् अवरुह्यात्मानम् अस्योपर्य्यवतिष्ठन्तं दृष्टवानहम्। अपरञ्च नाहमेनं ३३

प्रत्यभिज्ञातवान् इति सत्यं किन्तु यो जले मज्जयितुं मां प्रैरयत् सए-
वेमां कथामकथयत् यस्योपर्य्यात्मानम् अवतरन्तम् अवतिष्ठन्तञ्च द्रक्ष्यसि
३४ सएव पवित्रे आत्मनि मज्जयिष्यति। अतस्तन्निरीक्ष्यायम् ईश्वरस्य
तनयइति प्रमाणं ददामि।

३५ परेऽहनि योहन् द्वाभ्यां शिष्याभ्यां सार्द्धं तिष्ठन् यीशुं गच्छन्तं विलोक्य
३६ गदितवान् ईश्वरस्य मेषशावकं पश्यतं। इमां कथां श्रुत्वा द्वौ शिष्यौ यीशोः
३७ पश्चाद् ईयतुः। ततो यीशुः परावृत्य तौ पश्चाद् आगच्छन्तौ दृष्ट्वा
३८ पृष्टवान् युवां किं गवेषयथः? तावपृच्छतां हे रब्बि अर्थात् हे गुरो भवान्
३९ कुत्र तिष्ठति? ततः सोवादीत् एत्य पश्यतं। तदा तौ तेन सार्कं व्रजित्वा तस्य
वासस्थानम् अदर्शतां ततो दिवसस्य तृतीयप्रहरस्य गतत्वात् तौ तद्दिनं
४० तस्य सङ्गेऽस्थातां। यौ द्वौ योहनो वाक्यं श्रुत्वा यीशोः पश्चाद् अगमतां
४१ तयोः शिमोन् पितरस्य भ्राता य आन्द्रियः स इत्वा प्रथमं निजसोदरं
शिमोनं साक्षात् प्राप्य कथितवान् वयं ख्रीष्टम् अर्थात् अभिषिक्तपुरुषं
४२ साक्षात् कृतवन्तः। पश्चात् स तं यीशोः समीपम् आनयत्। तदा यीशुस्तं
दृष्ट्वावदत् त्वं यूनसः पुत्रः शिमोन् किन्तु त्वन्नामधेयं कैफाः (वा पितरः)
अर्थात् प्रस्तरो भविष्यति।

४३ परेऽहनि यीशौ गालीलं गन्तुं निश्चितचेतसि सति फिलिपनामानं जनं
४४ साक्षात् प्राप्यावोचत् मम पश्चाद् आगच्छ। बैत्सैदानाम्नि यस्मिन् ग्रामे
पितरान्द्रिययो र्वास आसीत् तस्मिन् ग्रामे तस्य फिलिपस्य वसतिरासीत्।
४५ पश्चात् फिलिपो निथनेयेलं साक्षात् प्राप्यावदत् मूसाव्यवस्थाग्रन्थे भविष्यद्-
वादिनां ग्रन्थेषु च यस्याख्यानं लिखितमास्ते तं यूषफः पुत्रं नासरीयं यीशुं
४६ साक्षाद् अकार्ष्म वयम्। तदा निथनेल् कथितवान् नासरन्नगरात्
किं कश्चिदुत्तम उत्पन्तुं शक्नोति? ततः फिलिप अवोचत् एत्य पश्य।
४७ अपरञ्च यीशुः स्वस्य समीपं तमागच्छन्तं दृष्ट्वा व्याहृतवान् पश्यायं निष्क-
४८ पटः सत्य इस्रायेल्लोकः। ततः सोवदद् भवान् मां कथं प्रत्यभिजानाति?
यीशुरवादीत् फिलिपस्य आह्वानात् पूर्व्वं यदा त्वमुडुम्बरस्य तरोर्मूलेऽस्थाः

तदा त्वामदर्शम्। निथनियेल् अचकथत् हे गुरो भवान् नितान्तम् ४९
ईश्वरस्य पुत्रोसि भवान् इस्रायेल्वंशस्य राजा। ततो यीशु र्व्याहरत् ५०
त्वामुडुम्बरस्य पादपस्य मूले दृष्टवानहं ममैतस्माद्वाक्यात् किं त्वं व्यश्वसीः?
एतस्मादप्याश्चर्य्यं कार्य्यं द्रक्ष्यसि। अन्यच्चावादीद् युष्मानहं यथार्थं वदामि ५१
इतःपरं मोचिते मेघद्वारे युष्माभि र्दृष्टे तस्मान्मनुजसूनुना ईश्वरस्य दूत-
गणम् अवरोहन्तम् अवतिष्ठन्तञ्च द्रक्ष्यसि।

---

## २ द्वितीयोध्यायः।

१ खीष्टस्य प्रथमाश्चर्य्यक्रिया १२ कफर्नाहूमस्तेन यानं १३ तेन यिरूशालमो यानं मन्दिरपरिष्करणञ्च १८ निजनिधनोत्थानयो र्भविष्यद्वाक्यं २३ तस्याश्चर्य्यक्रियाभि र्बहूनां विश्वासश्च।

अनन्तरं तृतीयदिवसे गालील्प्रदेशीये कान्नानाम्नि नगरे विवाह १
आसीत् तत्र च यीशो र्माताతिष्ठत्। तस्मै विवाहाय यीशुस्तस्य शिष्याश्च २
निमन्त्रिता आसन्। तदनन्तरं द्राक्षारसस्य न्यूनत्वाद् यीशोर्माता तमवदत् ३
एतेषां द्राक्षारसो नास्ति। तदा स तामवोचत् हे नारि मया सह तव ४
किं कार्य्यं? मम समय इदानीं नोपतिष्ठति। ततस्तस्य माता दासान् अवोचद् ५
अयं यद् वदति तदेव कुरुत। तस्मिन् स्थाने यिहूदीयानां शुचित्व- ६
करणव्यवहारानुसारेणाढकैकजलधराः पाषाणमयाः षड् वृहत्कलशा
आसन्। तदा यीशुस्तान् सर्व्वकलशान् जलैः पूरयितुं तानाज्ञापयत् ७
ततस्ते सर्व्वान् कुम्भान् आकर्णं जलैः पर्य्यपूरयन्। अथ तेभ्यः किञ्चिदुत्तार्य्य ८
भोज्याधिपतेः समीपं नेतुं स तानादिशत् ते तदनयन्। अपरञ्च तज्जलं ९
कथं द्राक्षारसोऽभवत् तज्जलवाहका दासा ज्ञातुं शक्ताः किन्तु तद्भो-
ज्याधिपो ज्ञातुम् अशक्नुवत् तदवलिह्य वरं सम्बोध्यावदत्, लोकाः प्रथमम् १०
उत्तमद्राक्षारसं ददति जनेषु यथेष्टं पीतवत्सु तस्मात् किञ्चिदनु-
त्तमञ्च ददति किन्तु त्वमिदानीं यावत् उत्तमद्राक्षारसं स्थापयसि। इत्थं ११
यीशु र्गालीलप्रदेशे आश्चर्य्यकर्म्म प्रारभ्य निजमहिमानं प्राकाशयत् ततः
शिष्यास्तस्मिन् व्यश्वसन्।

१२ ततःपरं स निजमातृभ्रातृशिष्यैः सार्द्धं कफर्नाहूमम् अगमत् किन्तु
तत्र बहुदिनानि नातिष्ठत्।

१३ तदनन्तरं यिहूदीयानां निस्तारोत्सवे निकटमागते यीशु र्यिरू-
१४ शालमनगरम् अगच्छत्। ततो मन्दिरस्य मध्ये गोमेषपारावतविक्र-
१५ यिणो वणिजश्चोपविष्टान् विलोक्य रज्जुभिः कशां निर्म्माय सर्व्वगोमेषा-
१६ दिभिः सार्द्धं तान् मन्दिराद् दूरीकृतवान्। एवं वणिजां मुद्रादि
विकीर्य्य आसनानि न्युब्जीकृत्य पारावतविक्रयिभ्योकथयद् अस्मात् स्थानात्
१७ सर्व्वाण्येतानि नयत मम पितु र्गृहं वाणिज्यगृहं मा कार्षिष्ट। तस्मात्
'त्वन्मन्दिरार्थ उद्योगोयस्तु स ग्रसतीव माम्।'
इमां शास्त्रीयलिपिं शिष्याः समस्मरन्।

१८ ततःपरं यिहूदीयलोका यीशुमवदन् त्वमीदृशकर्म्मकरणात् किं
१९ चिह्नमस्मान् दर्शयसि? ततो यीशुस्तानवोचद् युष्माभिरेतस्मिन् मन्दिरे
२० नाशिते दिनत्रयमध्येऽहं तद् उत्थापयिष्यामि। तदा यिहूदीया व्याहार्षुः,
एतस्य मन्दिरस्य निर्म्माणेन षट्चत्वारिंशद्वत्सरा गताः, त्वं किं दिन-
२१ त्रयमध्ये तद् उत्थापयिष्यसि? किन्तु स निजदेहरूपमन्दिरे कथामिमां
२२ कथितवान्। श्मशानात् तदीयोत्थाने सति स यदेतादृशं गदितवान
तच्छिष्याः स्मृत्वा धर्म्मग्रन्थे यीशुनोक्तकथायाञ्च व्यश्वसिषुः।

२३ अनन्तरं निस्तारोत्सवस्य भोज्यसमये यिरूशालमनगरे तत्कृताश्चर्य्य-
२४ कर्म्म विलोक्य बहुभिस्तस्य नामनि विश्वसितं। किन्तु स तेषां करेषु स्वं
२५ न समार्पयत् यतः स सर्व्वानवैत्। स मानवेषु कस्यचित् प्रमाणं नापेक्षत
यतो मनुजानां मध्ये यद्यदस्ति तत्तत् सोजानात्।

---

३ तृतीयोऽध्यायः।

१ निकदीमं प्रति ख्रीष्टस्योपदेशकथा २२ योहनो मज्जनम् २५ ख्रीष्टे योहनः साक्ष्यदानञ्च।

१ अपरञ्च निकदीमनामा यिहूदीयानाम् अधिपतिः फिरूशीःगणदायां
२ यीशोरभ्यर्णम् आव्रज्य व्याहार्षीत्, हे गुरो भवान् ईश्वराद् आगत एक

उपदेष्टा, एतद् अस्माभिर्ज्ञायते; यतो भवता यदाश्चर्य्यं कर्म्म क्रियते परमे-
श्वरस्य साहाय्यं विना केनापि तत्कर्म्म कर्त्तुं न शक्यते। तदा यीशुरुत्तरं ३
दत्तवान् त्वामहं यथार्थतरं व्याहरामि पुनर्जन्मनि न सति कोपि मानव
ईश्वरस्य राज्यं द्रष्टुं न शक्नोति। ततो निकदीमः प्रत्यवोचत् मनुजो वृद्धो ४
भूत्वा कथं जनिष्यते? स किं पुन र्मातुर्जठरं प्रविश्य जनितुं शक्नोति? यीशुर- ५
वादीद् यथार्थतरम् अहं कथयामि तोयवत् आत्मनः सकाशात् मनुजे
पुन र्न जाते स ईश्वरस्य राज्यं प्रवेष्टुं न शक्नोति। मांसाद् यो जायते तन् मांस- ६
मेव तथात्मनो यो जायते स आत्मैव। युष्माभिः पुन र्जनितव्यं ममैतस्यां ७
कथायाम् आश्चर्य्यं मा मंस्थाः। सदागति र्यां दिशमिच्छति तस्यामेव ८
दिशि वाति त्वं तस्य स्वनं शृणोषि किन्तु स कुत आयाति कुत्र याति वा
किमपि न जानासि तद्वत् आत्मनः सकाशात् सर्व्वेषां मनुजानां जन्म
भवति। तदा निकदीमः पृष्टवान् एतत् कथं भवितुं शक्नोति? यीशुः ९
प्रत्युक्तवान् त्वमिस्रायेलो गुरु र्भूत्वापि किमेतां कथां न वेत्सि? तुभ्यं यथार्थं १०
कथयामि वयं यद् विद्मस्तद् वच्मः यच्च पश्यामस्तस्यैव साक्ष्यं दद्मः किन्तु ११
युष्माभिरस्माकं साक्षित्वं न गृह्यते। एतस्य संसारस्य कथायां कथितायां १२
यदि यूयं न विश्वसिथ तर्हि स्वर्गीयायां कथायां कथं विश्वसिष्यथ? यः १३
स्वर्गेऽस्ति यश्च स्वर्गाद् अवारोहत् तं मानवतनयं विना कोपि स्वर्गं नारोहत्।
अपरञ्च मूसा यथा प्रान्तरे सर्पं प्रोत्थापितवान् मनुष्यपुत्रेणापि तथैवोत्था- १४
तव्यं; तस्माद् यः कश्चित् तस्मिन् विश्वसिष्यति सोऽविनाश्यः सन् अनन्तायुः १५
प्राप्स्यति। ईश्वर इत्थं जगददयत यत् स्वमद्वितीयं तनयं प्राददात् १६
ततो यः कश्चित् तस्मिन् विश्वसिष्यति सोऽविनाश्यः सन् अनन्तायुः
प्राप्स्यति। ईश्वरो जगतो लोकान् दण्डयितुं स्वपुत्रं न प्रेष्य तान् परित्रातुं १७
प्रेषितवान्। अतएव यः कश्चित् तस्मिन् विश्वसिति स दण्डार्हो न १८
भवति किन्तु यः कश्चित् तस्मिन् न विश्वसिति स इदानीमेव दण्डार्हो
भवति यतः स ईश्वरस्याद्वितीयपुत्रस्य नामनि प्रत्ययं न करोति।
अपरञ्च जगतो मध्ये ज्योतिः प्राकाशत किन्तु मानुषाणां कर्म्मणां दुष्टत्वात् १९

२० ते ज्योतिषोपि तिमिरे प्रीयन्ते एतदेव दण्डस्य कारणं भवति। यः
कुकर्म्म करोति तस्याचारस्य दुष्टत्वात् स ज्योति र्ऋतीयित्वा तन्निकटं
२१ नायाति; किन्तु यः सत्कर्म्म करोति तस्य सर्व्वाणि कर्म्माणीश्वरेण कृता-
नीति यथा प्रकाशते तदभिप्रायेण स ज्योतिषः सन्निधिम् आयाति।
२२ ततः परं यीशुः शिष्यैः सार्द्धं यिहूदीयदेशं गत्वा तत्र स्थित्वा मज्जयितुम्
२३ आरभत। अपरञ्च तदा शालम्नगरस्य समीपस्थायिनि ऐनन्ग्रामे
बहुतरतोयस्थितेस्तत्र योहन् अमज्जयत् तथाच लोका आगत्य तेन
२४ मज्जिता अभवन्। तदा योहन् कारायां न बद्धः।
२५ अपरञ्च शौचकर्म्मणि योहनः शिष्यैः सह यिहूदीयलोकानां विवादे
२६ जाते ते योहनः सन्निधिं गत्वाकथयन्, हे गुरो यर्द्दननद्याः पारे भवता
२७ सार्द्धं य आसीत् यस्मिंश्च भवान् साक्ष्यं प्रददात् पश्यतु सोपि मज्जयति
२८ सर्व्वे तस्य समीपं यान्ति च। तदा योहन् प्रत्यवोचद् ईश्वरेण न दत्ते
कोपि मनुजः किमपि प्राप्तुं न शक्नोति। अहम् अभिषिक्तो न भवामि किन्तु
तदग्रे प्रेषितोस्मि यामिमां कथां कथितवानहं तत्र यूयं सर्व्वे साक्षिणः स्थ।
२९ यो जनः कन्यां लभते स एव वरः किन्तु वरस्य सन्निधौ दण्डायमानं तस्य
यन्मित्रं तेन वरस्य शब्दे श्रुतेऽतीवाह्लाद्यते ममापि तद्वद् आनन्दसिद्धि-
३० र्जाता। तेन क्रमशो वर्द्धितव्यं किन्तु मया ह्रसितव्यं। य ऊर्द्ध्वादागच्छत्
३१ स सर्व्वेषां मुख्यो यश्च संसाराद् उदपद्यत स सांसारिकः संसारीयां
३२ कथाञ्च कथयति यस्तु स्वर्गादागच्छत् स सर्व्वेषां मुख्यः। अपरञ्च स यद्
अपश्यद् अशृणोच्च तस्मिन्नेव साक्ष्यं ददाति तथापि प्रायशः कश्चित् तस्य
३३ साक्ष्यं न गृह्लाति; किन्तु यो गृह्लाति स ईश्वरस्य सत्यत्वादित्वं मुद्राङ्कितं
३४ करोति। य ईश्वरस्य सएव ईश्वरीयकथां कथयति यत ईश्वर आत्मानं
३५ तस्मै अपरिमितम् अददात्। पिता पुत्रे स्नेहं कृत्वा तस्य हस्ते सर्व्वाणि
३६ अर्पितवान्। यः कश्चित् पुत्रे विश्वसिति सएवानन्तम् परमायुः प्राप्नोति
किन्तु यः कश्चित् पुत्रे न विश्वसिति स परमायुषो दर्शनं न प्राप्नोति
किन्त्वीश्वरस्य कोपभाजनं भूत्वा तिष्ठति।

## ४ चतुर्थोऽध्यायः।

१ शोमिरोणीयस्त्रियै ख्रीष्टस्योपदेशकथा २७ नगरे ख्रीष्टं प्रति वार्त्ताकथनं ३१ शिष्येभ्यः ख्रीष्टस्य कथनं ३९ नगरादागतलोकानां ख्रीष्टे विश्वसनं ४३ गालील्प्रदेशं प्रति ख्रीष्टस्य गमनं ४६ कफर्नाहूमि राजसभास्तारपुत्त्रस्य स्वास्थ्यञ्च।

यीशुः स्वयं नामज्जयत् केवलं तस्य शिष्या अमज्जयन् किन्तु योह- १
नोऽधिकशिष्यान् स करोति मज्जयति च फिरूशिन इमां वार्त्ताम् अशृण्वन् २
इति प्रभुरवगत्य यिहूदीयदेशं विहाय पुन र्गालीलम् अगात्। ततः ३
शोमिरोणप्रदेशस्य मध्येन तेन गन्तव्ये सति याकुब् निजपुत्त्राय युषफे ४
यां भूमिम् अददात् तत्समीपस्थायिशोमिरोणप्रदेशस्य सुखार्नाम्ना ५
विख्यातस्य नगरस्य सन्निधावुपास्थात्। तत्र याकुबः प्रहिरासीत्। ६
तदा द्वितीययामवेलायां जातायां स मार्गे श्रमापन्नस्तस्य प्रहेः पार्श्वे
उपाविशत्। एतर्हि शोमिरोणीया योषित् तोयोत्तोलनार्थम् तत्रागमत्। ७
तदा शिष्याः खाद्यद्रव्याणि क्रेतुं नगरम् अगच्छन्। यीशुः शोमिरोणीयां
तां योषितम् व्याहार्षीत् मह्यं किञ्चित् पानीयं पातुं देहि। किन्तु ८
शोमिरोणीयैः साकं यिहूदीयलोका न व्यवाहरन् तस्माद्धेतोः साकथयत् ९
शोमिरोणीया योषिदहं त्वं यिहूदीयोसि कथं मत्तःपानीयं पातुम्
इच्छसि? ततो यीशुरवदद् ईश्वरस्य यद्दानं तत्कीदृक् पानीयं १०
पातुं मह्यं देहि य इत्थं त्वां याचते स वा क इति चेदज्ञास्यथास्तर्हि
तमयाचिष्यथाः स च तुभ्यममृतं तोयमदास्यत्। तदा सा सीमन्तिनी ११
भाषितवती हे महेच्छ प्रहि र्गम्भीरो भवतो नीरोत्तोलनपात्त्रं नास्ति च
तस्मात् तदमृतं कीलालं कुतः प्राप्स्यसि? योस्मभ्यम् इममन्धुं ददौ १२
यस्य च परिजना गोमेषादयश्च सर्व्वेऽस्य प्रहेः पानीयं पपुरेतादृशो
योस्माकं पूर्व्वपुरुषो याकुब् तस्मादपि भवान् महान् किं? ततो १३
यीशुरकथयद् इदं पानीयं यः पिवति स पुनस्तृषार्त्तो भविष्यति किन्तु
मया दत्तं पानीयं यः पिवति स पुनः कदापि तृषार्त्तो न भविष्यति मया १४
दत्तम् इदं तोयं तस्यान्तः प्रस्रवणरूपं भूत्वा अनन्तायु र्यावत् स्रो-
ष्यति। तदा सा वनिताकथयत, हे महेच्छ तर्हि मम पुनः पिपासा यथा १५

न जायते तोयोत्तोलनाय यथात्रागमनं न भवति च तदर्थं मह्यं तत्तोयं
१६ ददातु। ततो यीशुरवदद् याहि तव पतिमाहूय स्थानेऽत्रागच्छ।
१७ सा वामावदत् मम पति र्नास्ति। यीशुरवदत् मम पति र्नास्तीतिवाक्यं
१८ भद्रं अवोचः, यतस्त्वं पञ्च पतयोऽभवन् अधुना तु त्वया सार्द्धं यस्तिष्ठति
१९ स तव भर्त्ता न वाक्यमिदं सत्यम् अवादीः। तदा सा महिला गदितवती
२० हे महेच्छ भवान् एको भविष्यद्वादीति बुद्धं मया। अस्माकं पितृलोका
एतस्मिन् शिलोच्चयेऽभजन्त किन्तु भवद्भिरुच्यते यिरूशालमनगरे भजन-
२१ योग्यं स्थानमास्ते। यीशुरवोचत्, हे योषित् मम वाक्ये विश्वसिहि यदा
यूयं केवलशैलेऽस्मिन् वा यिरूशालमनगरे पितु र्भजनं न करिष्यध्वे काल
२२ एतादृश आयाति। यूयं यं भजध्वे तं न जानीथ किन्तु वयं यं भजामहे तं
२३ जानीमहे यतो यिहूदीयलोकानां मध्यात् परित्राणं जायते। किन्तु
यदा सत्यभक्ता आत्मना सत्यरूपेण च पितु र्भजनं करिष्यन्ते समय एतादृश
आयाति वरम् इदानीमपि विद्यते यत एतादृशो भक्तान् पिता
२४ चेष्टते। ईश्वर आत्मस्वरूपः; तस्मिन् भक्त्ये सति आत्मना सत्यरूपेण च स
२५ भजनीयः। तदा सा महिलावादीत्, ख्रीष्टनाम्ना विख्यातोऽभिषिक्तः पुरुष
आगमिष्यतीति जानामि स एत्य च सर्व्वाः कथा अस्मान् ज्ञापयिष्यति।
२६ ततो यीशुरवदत् त्वया सार्द्धं कथनं करोमि योऽहम् अहमेव स पुरुषः।
२७　एतस्मिन् समये शिष्या आगत्य तथा स्त्रिया सार्द्धं तस्य कथावार्त्ता-
कथने महाश्चर्य्यम् अमन्यन्त तथापि भवान् किमिच्छति? यद्वा किमर्थम्
२८ एतया सार्द्धं कथां कथयति? इति कोपि नापृच्छत्। ततःपरं सा नारी
२९ कलशं स्थापयित्वा नगरमध्यं गत्वा लोकेभ्योकथयद् अहं यदा यद्यन् कर्म्मा-
करवं तत्सर्व्वं मह्यमकथयद् एतादृशं मानवमेकम् आगत्य पश्यत स किम्
३० अभिषिक्तो न भवति; ततस्ते नगराद् बहिरागत्य तस्य समीपम् आयन्।
३१　एतर्हि शिष्याः साधयित्वा तं व्याहार्षुः, हे गुरो भवान् किञ्चिद् भुंक्तां।
३२ ततः सोवदद् युष्माभि र्यन्न ज्ञायते तादृशं भक्ष्यं ममास्ते। तदा शिष्याः
३३ परस्परं प्रष्टुम् आरभन्त किमस्मै कोपि किमपि भक्ष्यमानीय दत्तवान्?

यीशुरवोचत् मत्प्रेरकस्याभिमतानुरूपकरणं तस्यैव कर्म्मसिद्धिकरणञ्च मम ३४
भोजनं। अपरञ्च मासचतुष्टये जाते शस्यकर्त्तनसमयो भवति इतिवाक्यं ३५
युष्माभिः किं नोद्यते? किन्त्वहं वदामि शिर उत्तोल्य क्षेत्राणि प्रति निरीक्ष्य
पश्यत, इदानीं कर्त्तनयोग्यानि शुक्लवर्णान्यभवन्। अपरञ्च यश्छिनत्ति स ३६
वेतनं लभते, अनन्तायुःस्वरूपं शस्यं संगृह्णाति च तेनैव वप्ता छेत्ता च
युगपद् आनन्दतः। इत्थं सति वपत्येकश्छिनत्त्यन्य इति वचनं सिद्ध्यति। ३७
अपरञ्च यत्र यूयं न पर्य्यश्राम्यत तादृशं शस्यं छेत्तुं युष्मान् प्रैरयम् अन्ये जना ३८
पर्य्यश्राम्यन् यूयं तेषां श्रमस्य फलम् अलभध्वम्।

अपरञ्च यस्मिन् काले यत् कर्म्माकार्षं तत्सर्व्वं स मह्यम् अकथयत् ३९
तस्या वनिताया इदं साक्ष्यवाक्यं श्रुत्वा तन्नगरनिवासिनो बहवः शोमि-
रोणीयलोका व्यश्वसन्। तथा च तस्यान्तिके समुपस्थाय स्वेषां सन्निधौ कति- ४०
चिद् दिनानि स्थातुं तस्मिन् विनयम् अकुर्व्वन् तस्मात् स दिनद्वयं तत्-
स्थाने न्यवसत्। ततस्तस्योपदेशेन बहवोपरे विश्वस्य तां योषामवदन् केवलं ४१
तव वाक्येन प्रतीम इति न, किन्तु स जगतोभिषिक्तस्त्रातेति तस्य कथां ४२
श्रुत्वा वयं स्वयमेवाज्ञास्महि।

स्वदेशे भविष्यद्वक्तुः सत्कारो नास्तीति यद्यपि यीशुः प्रमाणं दत्त्वा- ४३
कथयत् तथापि दिवसद्वयात् परं स तस्मात् स्थानाद् गालीलं गतवान्। ४४
अनन्तरं ये गालीलीयलोका उत्सवे गता उत्सवसमये यिरूशालम्नगरे ४५
तस्य सर्व्वाः क्रिया अपश्यन् तस्मिन् गालीलम् आगतवति ते तम् अगृह्लन्।

ततःपरं यीशु र्यस्मिन् कान्नानगरे जलं द्राक्षारसम् अकरोत् तत्स्थानं ४६
पुनरगात्। तस्मिन्नेव समये कस्यचिद् राजसभास्तारस्य पुत्रः कफर्नाहूम्-
पुरि रोगग्रस्त आसीत्। स यिहूदीयदेशाद् यीशो र्गालीलागमनवार्त्तां ४७
निशम्य तस्य समीपं गत्वा प्रार्थ्य व्याहृतवान् मम पुत्रस्य प्रायेण काल
आसन्नः, भवान् आगत्य तं स्वस्थं करोतु। तदा यीशुरकथयद् आश्चर्य्यं कर्म्म ४८
चित्रं चिह्नञ्च न दृष्ट्वा यूयं न प्रत्येष्यथ। ततः स सभासदवदत्, हे महेच्छ ४९
मम पुत्रे न मृते भवानागच्छतु। यीशुस्तमवदद् गच्छ तव पुत्रोऽजीवीत्। ५०

५१ तदा यीशुनोक्तवाक्ये स विश्वस्य गतवान्। गमनकाले मार्गमध्ये दासास्तं
५२ साक्षात् प्राप्यावदन् भवतः पुत्रोऽजीवीत्। ततः कं कालमारभ्य रोगप्रती-
कारारम्भो जात इति पृष्टे तैरुक्तं ह्यः सार्द्धदण्डद्वयाधिकद्वितीययामे तस्य
५३ ज्वरत्यागोऽभवत्। तदा यीशुस्तस्मिन् क्षणे प्रोक्तवान् तव पुत्रोऽजीवीत्
५४ पिता तद् बुद्ध्वा सपरिवारो व्यश्वसीत्। यिहूदीयदेशाद् आगत्य गालीलि
यीशुरेतद् द्वितीयम् आश्चर्य्यकर्म्माकरोत्।

---

## ५ पञ्चमोऽध्यायः।

१ अष्टत्रिंशद्वत्सरान् यावद् रोगग्रस्तमनुष्यस्य विश्रामवारे स्वास्थ्यकरणं १४ खीष्टेन यिहूदीयानां तर्जनं भिया च २१ खीष्टे योहनः पितुश्च धर्म्मशास्त्रस्य च साक्ष्यं।

१ ततःपरं यिहूदीयानाम् उत्सव उपस्थिते यीशु र्यिरूशालमं गतवान्।
२ तस्मिन्नगरे मेषनाम्नो द्वारस्य समीपे इब्रीयभाषया बैत्हिस्दा नाम्नी पुष्क-
३ रिणी पञ्चघट्टयुक्तासीत्। तस्य तेषु घट्टेषु कीलालकम्पनम् अपेक्ष्य अन्ध-
४ खञ्जशुष्काङ्गादयो बहवो रोगिणः पतन्तस्तिष्ठन्ति स्म। यतो विशेष-
काले तस्य सरसो वारि स्वर्गीयदूत एत्याकम्पयत् तत्कीलालकम्पनात् परं
यः कश्चिद् रोगी प्रथमं पानीयमवारोहत् स एव तत्क्षणाद् रोगमुक्तो भवत्।
५ तदाष्टात्रिंशद्वर्षाणि यावत् रोगग्रस्त एको जनस्तस्मिन् स्थाने स्थितवान्।
६ यीशुस्तं पतन्तं दृष्ट्वा बहुकालिकरोगीति ज्ञात्वा च व्याहृतवान् त्वं किं
७ स्वस्थो बुभूषसि ? ततो रोगी कथितवान् हे महेच्छ यदा कीलालं कम्पते
तदा मां यः पुष्करिणीम् अवरोहयति तादृशो लोकः कोपि नास्ति
८ तस्मान्मम गमनकाले कश्चिदन्योऽग्रे गत्वावरोहति। तदा यीशुरकथ
९ यद् उत्तिष्ठ तव शय्यामुत्तोल्य गृहीत्वा याहि। स तत्क्षणात् स्वस्थो भूत्वा
शय्यामुत्तोल्यादाय गतवान् किन्तु तद्दिनं विश्रामवारः। तस्माद् यिहूदीयाः
१० स्वस्थं नरं व्याहरन् अद्य विश्रामवारे शयनीयमादाय न यातव्यम्। ततः
११ स प्रत्यवोचद् यो माम् स्वस्थम् अकार्षीत्, शयनीयम् उत्तोल्यादाय यातुं
१२ मां स एवादिशत्। तदा तेऽपृच्छन् शयनीयम् उत्तोल्यादाय यातुं य

आज्ञापयत् स कः ? किन्तु स क इति स्वस्थीभूतो नाजानाद् यतस्तस्मिन् १३
स्थाने जनतासत्त्वाद् यीशुः स्थानान्तरम् अगमत्।

ततःपरं यीशु र्मन्दिरे तं नरं साक्षात् प्राप्याकथयत् पश्येदानीम् १४
अनामयो जातोसि यथाधिका दुर्द्दशा न घटते तद्धेतोः पापं कर्म्म पुन
र्माकार्षीः। ततः स गत्वा यिहूदीयान् अवदद् यीशु र्माम् अरोगिणम् १५
अकार्षीत्। ततो यीशु र्विश्रामवारे कर्म्मेदृशं कृतवान् इतिहेतो र्यिहू- १६
दीयास्तं ताडयित्वा हन्तुम् अचेष्टन्त। यीशुस्तानाख्यत् मम पिता यत् १७
कार्य्यं करोति तदनुरूपम् अहमपि करोमि। ततो यिहूदीयास्तं हन्तुं १८
पुनरयतन्त यतो विश्रामवारम् नामन्यत तदेव केवलं न अधिकन्तु ईश्वरं
स्वपितरं प्रोच्य स्वमपीश्वरतुल्यं कृतवान्। पश्चाद् यीशुरवदद् युष्मानहं १९
यथार्थतरं वदामि पुत्त्रः पितरं यद्यत् कर्म्म कुर्व्वन्तं पश्यति तदतिरिक्तं
स्वेच्छातः किमपि कर्म्म कर्त्तुं न शक्नोति। पिता यत् करोति पुत्त्रोपि तदेव २०
करोति पिता पुत्त्रे स्नेहं करोति तस्मात् स्वयं यद्यत् कर्म्म करोति
तत्सर्व्वं पुत्त्रं दर्शयति। अपरञ्च यथा युष्माकं आश्चर्य्यज्ञानं जायते तदर्थं २१
इतोपि महाकर्म्म तं दर्शयिष्यति वस्तुतस्तु पिता यथा प्रमीतान् उत्थाप्य
सजीवान् करोति तद्वत् पुत्त्रोपि यं यम् इच्छति तं तं सजीवं करोति।
सर्व्वे पितरं यथा सत्कुर्व्वन्ति तथा पुत्त्रमपि सत्कर्त्तुं पिता स्वयं २२
कस्यापि विचारमकृत्वा सर्व्वविचाराणां भारं पुत्त्रे समर्पितवान्। यः पुत्त्रं २३
सत् करोति स तस्य प्रेरकमपि सत् करोति। युष्मानहं यथार्थतरं वदामि २४
यो जनो मम वाक्यं श्रुत्वा मत्प्रेरके विश्वसिति सोनन्तायुः प्राप्नोति
कदापि दण्डभाजनं न भवति किन्तु निधनादुत्थाय परमायुः प्राप्नोति।
अहं युष्मानतियथार्थं वदामि यदा परेता ईश्वरपुत्त्रस्य निनादं श्रोष्यन्ति २५
ये च श्रोष्यन्ति ते सजीवा भविष्यन्ति समय एतादृश आयाति वरम्
इदानीमप्युपतिष्ठति। पिता यथा स्वयंजीवी तथा पुत्त्राय स्वयं जीवि- २६
त्वाधिकारं दत्तवान्। स मनुष्यपुत्त्रः, एतस्मात् कारणात् पिता दण्ड- २७
करणाधिकारमपि तस्मिन् समर्पितवान्। एतदर्थे यूयम् आश्चर्य्यं न २८

मन्यध्वं यतो यस्मिन् समये तस्य निनादं श्रुत्वा श्मशानस्थाः सर्व्वे बहिराग-
२९ मिष्यन्ति समय एतादृश उपस्थास्यति। तस्माद् ये सत्कर्म्माणि कृतवन्तस्त
उत्थाय आयुः प्राप्स्यन्ति ये च कुकर्म्माणि कृतवन्तस्त उत्थाय दण्डं
३० प्राप्स्यन्ति। अहं स्वयं किमपि कर्त्तुं न शक्नोमि यथा शृणोमि तथा
विचारयामि मम विचारो न्याय्यः, अहं स्वीयमिष्टं नेहित्वा मत्प्रेरयितुः
पितुरिष्टम् ईहे।
३१ अपरञ्च यदि स्वस्मिन् स्वयं साक्ष्यं ददामि तर्हि तत्साक्ष्यम् अग्राह्यं
३२ भवति; किन्तु मदर्थेऽपरो जनः साक्ष्यं ददाति मदर्थे तस्य यत्
३३ साक्ष्यं तत् सत्यम् एतदप्यहं जानामि। युष्माभि योहनं प्रति लोकेषु प्रेरितेषु
३४ स सत्यकथायां साक्ष्यमददात्। मानुषादहं साक्ष्यं नोपेक्षे तथापि यूयं
३५ यथा परित्रायध्वे तदर्थम् इदं वाक्यं वदामि। योहन् देदीप्यमानो दीप
इव तेजस्वी स्थितवान् यूयम् अल्पकालं तस्य दीप्त्या आनन्दितुं
३६ सममन्यध्वं। किन्तु तत्प्रमाणादपि मम गुरुतरं प्रमाणं विद्यते पिता मां
प्रेष्य यद्यत् कर्म्म समापयितुं शक्तिमददात् मया कृतं तत्तत् कर्म्म
३७ मदर्थे प्रमाणं ददाति। अपरञ्च यः पिता मां प्रेरितवान् सोऽपि मदर्थे
३८ प्रमाणं ददाति। तस्य वाक्यं युष्माभिः कदापि न श्रुतं तस्य रूपञ्च न दृष्टं
तस्य वाक्यं युष्माकम् अन्तः कदापि स्थानं नाप्नोति यतः स यं प्रेषित-
३९ वान् यूयं तस्मिन् न विश्वसिथ। धर्म्मपुस्तकस्य वाक्यं यूयम् आलो-
चयध्वे तै र्वाक्यैरनन्तायुः प्राप्स्याम इति च यूयं बुध्यध्वे तद्धर्म्मपुस्तकं
४० मदर्थे प्रमाणं ददाति। तथापि यूयं परमायुःप्राप्तये मम सन्निधिम्
४१ न जिगमिषथ। अहं मानुषेभ्यः सत्कारं न गृह्लामि। अहं युष्मान्
४२
४३ जानामि युष्माकमन्तर ईश्वरप्रेम नास्ति। अहं निजपितु र्नाम्नागतोस्मि
तथापि मां न गृह्लीथ किन्तु कश्चिद् यदि स्वनाम्ना समागमिष्यति तर्हि
४४ तं ग्रहीष्यथ। यूयम् ईश्वरात् सत्कारं न चेष्टित्वा केवलं परस्पर सत्का-
४५ रम् चेद् आदद्ध्वे तर्हि कथं विश्वसितुं शक्नुथ? पितुः समीपेऽहं युष्मान् अप-
वदिष्यामीति मा चिन्तयत यस्मिन् युष्माकं विश्वासः स एव मूसा युष्मान्

ऽपवदति। यदि यूयं तस्मिन् व्यश्वसिष्यत तर्हि मय्यपि व्यश्वसिष्यत यतः ४६
स मयि लिखितवान्। ततो यदि तेन लिखितानि न प्रतीथ तर्हि मम ४७
वाक्यानि कथं प्रत्येष्यथ।

---

## ६ षष्ठोऽध्यायः।

१ ख्रीष्टस्य सिन्धुपारगमनं ४ पञ्चभिः पूपैर्द्वाभ्यां मत्स्याभ्याञ्च पञ्चसहस्रलोकानां भोजनं १६ तोयोपरि ख्रीष्टस्य पदव्रजनं २२ तदन्तिके बहुलोकागमे तेषामुपदेशः ४१ स्वस्याहाररूपकथनं ५२ विवादियिहूदीयान् प्रति प्रत्युत्तरं ६० बहुलोकैस्तस्य त्यागः शिष्याणां स्थिरस्थितिश्च।

ततःपरं यीशु गालील्प्रदेशीयस्य तिविरियानाम्नः सिन्धोः पारं १
गतवान्। ततो व्याधिमल्लोकस्वास्थ्यकरणरूपं तस्याश्चर्य्यं कर्म्म दृष्ट्वा बहवो २
जनास्तत्पश्चाद् अगच्छन्। ततो यीशुः पर्व्वतमारुह्य तत्र शिष्यैः साकम् ३
उपाविशत्।

तस्मिन् समये निस्तारोत्सवनाम्नि यिहूदीयानाम् उत्सव उपस्थिते ४
यीशु र्नेत्रे उत्तोल्य बहुलोकान् स्वसमीपागतान् विलोक्य फिलिपं
पृष्टवान् एतेषां भोजनाय भोज्यद्रव्याणि वयं कुत्र क्रेतुं लप्स्यामहे? वाक्य- ५
मिदं तस्य परीक्षार्थम् अवादीत् किन्तु यत् करिष्यति तत् स्वयम् अजा- ६
नात्। फिलिपः प्रत्यवोचत् एतेषाम् एकैको यद्यल्पं अल्पं प्राप्नोति तथापि ७
मुद्रापादद्विशतेन क्रीतपूपा अपि न्यूना भविष्यन्ति। अनन्तरं शिमोन् ८
पितरस्य भ्राता आन्द्रियाख्यः शिष्याणामेको व्याहृतवान्, अत्र कस्यचिद् ९
बालकस्य समीपे पञ्च यावपूपाः क्षुद्रमत्स्यद्वयञ्च सन्ति किन्तु लोकानाम्
एतावतां मध्ये तैः किं भविष्यति? पश्चाद् यीशुरवदत् लोकानुपवेशयत; १०
तत्र बहुयवससत्त्वात् पञ्चसहस्रेभ्यो न्यूना अधिका वा लोका भूम्याम्
उपाविशन्। ततो यीशुस्तान् पूपानादाय ईश्वरस्य गुणान् कीर्त्तयित्वा ११
शिष्येषु समार्पयत् ततस्ते तेभ्य उपविष्टलोकेभ्यः पूपान् यथेष्टमत्स्यांश्च प्राददुः।
अपरञ्च तेषु तृप्तेषु स तानवोचद् एतेषां किञ्चिदपि यथा नापचीयते तथा १२
सर्व्वाण्यवशिष्टानि संगृह्णीत। ततः सर्व्वेषां भोजनात् परं ते तेषां पञ्चानां १३

यावपूपानां अवशिष्टान्यखिलानि संगृह्य द्वादशडल्लकान् अपूरयन्।
१४ अपरं यीशोरेतादृशीम् आश्चर्य्यक्रियां दृष्ट्वा लोका मिथो वक्तुमारेभिरे
१५ जगति यस्यागमनं भविष्यति स एवायम् अवश्यं भविष्यद्वक्ता। अतएव
लोका आगत्य तमाक्रम्य राजानं करिष्यति यीशुस्तेषाम् ईदृशं मानसं
विज्ञाय पुनश्च पर्व्वतम् एकाकी गतवान्।
१६ अपरञ्च सायंकाल उपस्थिते शिष्या जलधितटं व्रजित्वा नावमारुह्य
१७ कफर्नाहूम्नगरदिशि सिंधौ वाहयित्वागमन्। तस्मिन् समये तिमिर
१८ उपातिष्ठत् किन्तु यीशुस्तेषां समीपं नागच्छत्। तदा प्रबलपवनवहनात्
१९ सागरे महातरङ्गो भवितुम् आरेभे। ततस्ते वाहयित्वा द्वित्रान् क्रोशान्
गताःपश्चाद् यीशुं जलधेरुपरि पद्भ्यां व्रजन्तं नौकान्तिकम् आगच्छन्तं
२० विलोक्य त्रासयुक्ता अभवन्; किन्तु स तानुक्तवान् अयमहं मा भैष्ट। तदा ते
२१ तं स्वैरं नावि गृहीतवन्तः; तदा तत्क्षणाद् उद्दिष्टस्थाने नौरुपास्थात्।
२२ अपरञ्च यया नावा शिष्या अगच्छन् तदन्या कापि नौका तस्मिन् स्थाने
नासीत् ततो यीशुः शिष्यैः सार्कं नागमत् केवलाः शिष्या अगमन् एतत्
२३ पारस्था लोका ज्ञातवन्तः। किन्तु ततःपरं प्रभु र्यत्र ईश्वरस्य गुणान्
अनुकीर्त्त्य लोकान् पूपान् अभोजयच्च तत्स्थानस्य समीपस्थतिविरि-
२४ याया अपरास्तरण्य आगमन्। यीशुस्तत्र नास्ति शिष्या अपि तत्र न
सन्ति लोका इति विज्ञाय यीशुं गवेषयितुं तरणिभिः कफर्नाहूम्पुरं
२५ गताः। ततस्ते सरित्पतेः पारे तं साक्षात् प्राप्य प्रावोचन् हे गुरो भवान् अत्र
२६ स्थाने कदागमत्? तदा यीशुस्तान् प्रत्यवादीद् युष्मानहं यथार्थतरं वदामि
आश्चर्य्यकर्म्मदर्शनाद्धेतो र्न किन्तु पूपभोजनात् तेन पूरणाच्च मां गवे-
२७ षयथ। क्षयणीयभक्ष्यार्थं मा श्राम्यिष्ट किन्त्वनन्तायु र्भक्ष्यार्थं श्राम्यत तस्मात्
तादृशं भक्ष्यं मनुजपुत्रो युष्मभ्यं दास्यति, तस्मिन् तात ईश्वरःप्रमाणं प्रादात्।
२८ तदा तेऽपृच्छन् ईश्वराभिमतं कर्म्म कर्त्तुम् अस्माभिः किं कर्त्तव्यं? ततो
२९ यीशुरवदद् ईश्वरो यं प्रैरयत् तस्मिन् विश्वसनम् ईश्वराभिमतं कर्म्म। तदा
३० ते व्याहरन् भवता किं लक्षणं दर्शितं यद् दृष्ट्वा भवति विश्वसिष्यामः?

त्वया किं कर्म्म कृतं ? अस्माकं पूर्व्वपुरुषा महाप्रान्तरे मान्नां भोक्तुं प्रापुः ३१
यथा लिपिरास्ते

'स्वर्गीयाणि तु भक्ष्याणि प्रददौ परमेश्वरः।'

तदा यीशुरवदद् अहं युष्मानतियथार्थं वदामि मुसा युष्मभ्यं स्वर्गीयं ३२
भक्ष्यं नादात् किन्तु मम पिता युष्मभ्यं स्वर्गीयं परमं भक्ष्यम् अदात्।
यः स्वर्गादवरुह्य जगते जीवनं ददाति स ईश्वरदत्तभक्ष्यरूपः। तदा ते ३३ ३४
प्रोवोचन् हे प्रभो भक्ष्यमिदं नित्यमस्मभ्यं ददातु। यीशुरवदद् अहमेव ३५
जीवनरूपं भक्ष्यं यो जनो मम सन्निधिम् आगच्छति स जातु क्षुधार्त्तो न
भविष्यति तथा यो जनो मां प्रत्येति स जातु तृषार्त्तो न भविष्यति। मां ३६
दृष्ट्वापि यूयं न विश्वसिथ युष्मानहम् इत्यवोचं। पिता मह्यं यावतो ३७
लोकानददात् ते सर्व्वएव ममान्तिकम् आगमिष्यन्ति किन्तु यः कश्चिन्
मम सन्निधिम् आयास्यति तं केनापि प्रकारेण न दूरीकरिष्यामि।
निजाभिमतं साधयितुं नहि किन्तु प्रेरयितुरभिमतं साधयितुं स्वर्गाद् ३८
आगतोस्मि। स यान् यान् लोकान् मह्यमददात् तेषामेकमपि न हार- ३९
यित्वा शेषदिने सर्व्वानहम् उत्थापयामि, इदं मत्प्रेरयितुः पितुरभिमतं।
अपरञ्च यः कश्चिन् मानवसुतं विलोक्य विश्वसिति स शेषदिने मयोत्था- ४०
पितः सन् अनन्तायुः प्राप्स्यति, इति मत्प्रेरकस्याभिमतं।

तदा स्वर्गाद् यद् भक्ष्यम् अवारोहत् तद् भक्ष्यम् अहमेव यिहूदीय- ४१
लोकास्तस्यैतद्वाक्ये विवदमाना वक्तुमारेभिरे युषफः पुत्रो यीशु र्यस्य ४२
मातापितरौ वयं जानीम एष किं सएव न ? तर्हि स्वर्गाद् अवारोहम्
इतिवाक्यं कथं वक्ति ? तदा यीशुस्तान् प्रत्यवदत् परस्परं मा विवदध्वं ; ४३
मत्प्रेरकेण पित्रा नाकृष्टः कोपि जनो ममान्तिकम् आयातुम् न शक्ष्यति ४४
किन्त्वाकृष्टं जनं चरमेऽह्नि प्रोत्थापयिष्यामि। 'ते सर्व्वे ईश्वरेण शिक्षिता ४५
भविष्यन्ति' भविष्यद्वादिनां ग्रन्थेषु लिपिरित्थमास्ते अतो यः कश्चित्
पितुः सकाशात् श्रुत्वा शिक्षते सएव मम समीपम् आगमिष्यति। य ४६
ईश्वराद् अजायत तं विना कोपि मनुष्यो जनकं नादर्शत् केवलः सएव

४७ तातम् अद्राक्षीत्। अहं युष्मान् यथार्थतरं वदामि यो जनो मयि विश्वासं
४८ करोति सोऽनन्तायुः प्राप्नोति। अहमेव तज्जीवनं भक्ष्यं। युष्माकं पूर्व्वपुरुषा
४९ महाप्रान्तरे मान्नाभक्ष्यं भुक्त्वापि मृताः; किन्तु यद्भक्ष्यं स्वर्गादागच्छत् तद्
५० यदि कश्चिद् भुंक्ते तर्हि स न म्रियते। यज्जीवनभक्ष्यं स्वर्गादागच्छत्
५१ सोऽहमेव; इदं भक्ष्यं यो जनो भुंक्ते स नित्यजीवी भविष्यति। पुनश्च यद्
भक्ष्यं जगतो जीवनार्थम् अहं दास्यामि तन्ममैव पिशितं।

५२ तस्माद् यिहूदीयाः परस्परं विवदमाना वक्तुमारेभिरे, एष भोज-
५३ नार्थं स्वीयं पललं कथम् अस्मभ्यं दास्यति? तदा यीशुस्तान् अवोचद् युष्मा-
नहं यथार्थतरं वदामि मनुष्यपुत्त्रस्यामिषे युष्माभि र्न भुक्ते तस्य रुधिरे च
५४ न पीते जीवनेन सार्द्धं युष्माकं सम्बन्धो नास्ति। यो ममामिषं खादति
मम रुधिरञ्च पिवति सोऽनन्तायुः प्राप्नोति ततः शेषेऽह्नि तमहम् उत्था-
५५ पयिष्यामि। यतो मदीयमामिषं परमं भक्ष्यं तथा मदीयं शोणितं
५६ परमं पेयं। यो जनो मदीयं पललं खादति मदीयं रुधिरञ्च पिवति स
५७ मयि वसति तस्मिन्नहञ्च वसामि। मत्प्रेरयित्रा जीवता तातेन यथाहं
जीवामि तद्वद् यः कश्चिन् मामत्ति सोऽपि मया जीविष्यति। यद्भक्ष्यं
५८ स्वर्गादागच्छत् तदिदं; यन्मान्नां खादित्वा युष्माकं पितरोऽम्रियन्त
तादृशम् इदं भक्ष्यं न भवति, इदं भक्ष्यं यो भक्षति स नित्यं जीवि-
५९ ष्यति। यदा कफर्नाहूम् पुर्य्यां भजनगेहे उपादिशत् तदा कथा एता
अकथयत्।

६० तदेत्थं श्रुत्वा तस्य शिष्याणाम् अनेकाः परस्परम् अकथयन् इदं गाढं
६१ वाक्यं; वाक्यमीदृशं कः श्रोतुं शक्नोति? किन्तु यीशुः शिष्याणाम् इत्थं
विवादं स्वचित्ते विज्ञाय कथितवान् इदं वाक्यं किं युष्माकं विघ्नं जनयति?
६२ यदि मनुजसुतं पूर्व्ववासस्थानम् ऊर्द्ध्वं गच्छन्तं पश्यथ तर्हि किं भविष्यति?
६३ आत्मैव जीवनदायकः, वपु र्निष्फलं; युष्मभ्यमहं यां कथां कथयामि
६४ सा आत्मा जीवनञ्च। किन्तु युष्माकं मध्ये के के अविश्वासिनः सन्ति;
के के न विश्वसन्ति को वा तं परकरेषु समर्पयिष्यति तान् यीशुराप्रथमाद्

वेत्ति। अपरमपि कथितवान् अस्मात् कारणाद् अकथयं पितुः सकाशात् ६५
शक्तिमप्राप्य कोपि ममान्तिकम् आगन्तुं न शक्ष्यति।

अतस्तत्कालेऽनेकाः शिष्या व्याघुट्य गतास्तेन सार्द्धं पुन र्नागच्छन्। ६६
तदा यीशु र्द्वादशशिष्यान् उक्तवान् यूयमपि किं यास्यथ? ततः शिमोन् ६७
पितरः प्रत्यवोचत् हे प्रभो कस्याभ्यर्णं गमिष्यामः? अनन्तजीवनदायिन्यो याः ६८
कथास्तास्तवैव। अपरञ्च त्वम् अमरेश्वरस्याभिषिक्तपुत्र इति विश्वस्य निश्चितं ६९
जानीमः। तदा यीशुरवदत् किमहं युष्माकं द्वादशजनान् मनोनीतान् ७०
न कृतवान्? किन्तु युष्माकं मध्येऽपि कश्चिदेको विघ्नकारी विद्यते। इमां ७१
कथां स शिमोनः पुत्रं ईष्कारीयोतीयं यिहूदाम् उद्दिश्य कथितवान् यतो
द्वादशानां मध्ये गणितः स तं परकरेषु समर्पयिष्यति।

---

## ७ सप्तमोऽध्यायः।

१ खीष्टस्य यिरूशालमगमनं १४ मन्दिरस्थलोकेभ्य उपदेशः २५ विवादिनः प्रति प्रत्युत्तरं ३२ मस्योपदेशः ३७ तमुद्दिश्य लोकानां विचारः ४५ महायाजकानां फिरूशीनाञ्च खीष्टं प्रति विपक्षता च।

ततःपरं यिहूदीयलोकास्तं हन्तुं समैहन्त तस्माद् यीशु र्यिहूदा- १
प्रदेशे भ्रमितुम् नेच्छन् गालील्प्रदेशे भ्रमितुं प्रारभत। किन्तु तस्मिन् २
समये यिहूदीयानां दूष्यवासनामोत्सव उपस्थिते तस्य भ्रातरस्तमवदन्
यानि कर्म्माणि त्वयाक्रियन्ते तानि यथा तव शिष्याः पश्यन्ति तदर्थं ३
त्वमितः स्थानाद् यिहूदीयदेशं व्रज। यः कश्चित् स्वयं प्रचिकाशिषति ४
स कदापि गुप्तं कर्म्म न करोति। यदीदृशं कर्म्म करोषि तर्हि जगति ५
निजं परिचायय यतस्तस्य भ्रातरोपि तं न विश्वसन्ति। तदा यीशुस्तान् ६
अवोचत्, मम समय इदानीं नोपतिष्ठति किन्तु युष्माकं समयः सततम्
उपतिष्ठति। जगतो लोका युष्मान् ऋतीयितुं न शक्नुवन्ति किन्तु ७
मामेव ऋतीयन्ते यतस्तेषां कर्म्माणि दुष्टानि तत्र साक्ष्यमिदम् अहं
ददामि। अतएव यूयं उत्सवेऽस्मिन् यात नाहम् अस्मिन्नुत्सवे यास्यामि ८
यतो मम समय इदानीं न सम्पूर्णः। इति वाक्यम् उक्त्वा स गालीलि ९
स्थितवान्। किन्तु तस्य भ्रातृषु तत्र प्रस्थितेषु सत्सु सोऽप्रकट उत्सवे १०

११ अगच्छत्। अनन्तरं उत्सव उपस्थिता यिहूदीयास्तं मृगयित्वापृच्छन् स
१२ कुत्र? ततो लोकानां मध्ये तस्मिन् नानाविधा विवादा भवितुम् आरब्ध-
१३ वन्तः। केचिद् अवोचन् स उत्तमः पुरुषः केचिद् अवोचन् न तथा वरं
लोकानां भ्रमं जनयति किन्तु यिहूदीयानां भयात् कोपि तस्य पक्षे
स्पष्टं नाकथयत्।

१४ ततःपरं उत्सवस्य मध्यसमये यीशु र्मन्दिरं गत्वा समुपदिशति स्म।
१५ ततो यिहूदीया लोका आश्चर्य्यं ज्ञात्वाकथयन् एष मानुषो नाधीत्य कथं
१६ एतादृशो विद्वानभूत्? तदा यीशुः प्रत्यवोचद् उपदेशोयं न मम किन्तु
१७ यो मां प्रेषितवान् तस्य। यो जनो निदेशं तस्य ग्रहीष्यति ममोपदेशो मत्तो
१८ भवति किम् ईश्वराद् भवति स जनस्तज्ज्ञातुं शक्ष्यति। यो जनः स्वतः
कथयति स स्वीयं गौरवम् ईहते किन्तु यः प्रेरयितु गौरवम् ईहते स सत्य-
१९ वादी तस्मिन् कोप्यधर्म्मो नास्ति। मूसा युष्मभ्यं व्यवस्थाग्रन्थं किं नाददात्?
किन्तु युष्माकं कोपि तां व्यवस्थां न समाचरति मां हन्तुं कुतो यतध्वे?
२० तदा लोका अवदन् त्वं भूतग्रस्तस्त्वां हन्तुं को यतते? ततो यीशुर-
२१ वोचद् एकं कर्म्म मयाकारि तस्माद् यूयं सर्व्वे महाश्चर्य्यं मन्यध्वे। मूसा
२२ युष्मभ्यं त्वक्छेदविधिं प्रददौ स मूसातो न जातः किन्तु पितृपुरु-
२३ षेभ्यो जातः, तेन विश्रामवारेऽपि मानुषाणां त्वक्छेदं कुरुथ। अतएव
विश्रामवारे मनुष्याणां त्वक्छेदे कृते यदि मूसाव्यवस्थालङ्घनं न भवति
तर्हि मया विश्रामवारे मानुषः सम्पूर्णरूपेण स्वस्थोऽकारि तत्कारणाद्
२४ यूयं किं मह्यं कुप्यथ? सपक्षपातं विचारमकृत्वा न्याय्यं विचारं कुरुत।

२५ तदा यिरूशालम्निवासिनः कतिपयजना अकथयन् इमे यं हन्तुं
२६ चेष्टन्ते सएवायं किं न? किन्तु पश्यत निर्भयः सन् कथां कथयति तथापि
किमपि न वदन्त्येते; अयमेवाभिषिक्तो भवतीति निश्चितं किमधिपतयो
२७ जानन्ति? मनुजोयं कस्मादागमद् इति वयं जानीमः किन्त्वभिषिक्त
२८ आगते स कस्मादागतवान् इति कोपि ज्ञातुं न शक्ष्यति। तदा यीशु
र्मध्येमन्दिरम् उपदिशन् उच्चैःकारम् उक्तवान यूयं किं मां जानीथ?

कस्मादागतोस्मि तदपि किं जानीथ? नाहं स्वत आगतोस्मि किन्तु यः २९
सत्यवादी सएव मां प्रेषितवान्। यूयं तं न जानीथ तमहं जाने तेनाहं ३०
प्रेरित आगतोस्मि। तस्माद् यिहूदीयास्तं धर्त्तुम् उद्यतास्तथापि कोपि
तस्य गात्रे हस्तं नार्पयद् यतोहेतोस्तदा तस्य समयो नोपतिष्ठति। किन्तु ३१
बहवो लोकास्तस्मिन् विश्वस्य कथितवन्तोभिषिक्तपुरुष आगत्य मानुषस्यास्य
क्रियातः किम् अधिका आश्चर्य्याः क्रियाः करिष्यति?

ततःपरं लोकास्तस्मिन् इत्थं विवदन्ते फिरूशिन इति श्रुतवन्तः प्रधान- ३२
याजकाश्च तं धृत्वा नेतुं पदातिगणं प्रेषयामासुः। ततो यीशुरवदद् ३३
अहम् अल्पदिनानि युष्माभिः सार्द्धं स्थित्वा मत्प्रेरयितुः समीपं यास्यामि।
मां मृगयिष्यध्वे किन्तूद्देशं न लप्स्यध्वे; यत्र स्थास्यामि तत्र यूयं ३४
गन्तुं न शक्ष्यथ। तदा यिहूदीयाः परस्परं वक्तुमारेभिरे अस्योद्देशं न ३५
प्राप्स्याम एतादृशं किं स्थानं यास्यति? भिन्नदेशे विकीर्णानां यिहूदी-
यानां सन्निधिम् एष गत्वा तान् उपदेक्ष्यति किं? नो चेत् मां गवेषयि- ३६
ष्यथ किन्तूद्देशं न प्राप्स्यथ, एष कीदृशं वाक्यमिदं वदति?

अनन्तरं उत्सवस्य चरमेऽहनि, अर्थात् प्रधानदिने यीशुरुत्तिष्ठन् उच्चैः- ३७
कारं आह्वयन् उदितवान् यदि कश्चित् तृषार्त्तो भवति तर्हि ममान्तिकम्
आगत्य पिवतु; यः कश्चिन्मयि विश्वसिति धर्म्मग्रन्थस्य वचनानुसारेण ३८
तस्याभ्यन्तरतो ऽमृततोयस्य स्रोतांसि निर्गमिष्यन्ति। ये तस्मिन् विश्व- ३९
सन्ति ते आत्मानं प्राप्स्यन्तीत्यर्थे स इदं वाक्यं व्याहृतवान् एतत्कालं
यावत् यीशु र्विभवं न प्राप्तस्तस्मात् पवित्रआत्मा नादीयत। एतां वाणीं ४०
श्रुत्वा बहवो लोका अवदन् अयमेव निश्चितं स भविष्यद्वादी। केचिद् ४१
अकथयन् एषएव सोभिषिक्तः किन्तु केचिद् अवदन् सोभिषिक्तः किं
गालील्प्रदेशे जनिष्यते? सोभिषिक्तो दायूदो वंशे दायूदो जन्मस्थाने वैत- ४२
लिहिम् पत्तने जनिष्यते धर्म्मग्रन्थे किमित्थं लिखितं नास्ति? इत्थं ४३
तस्मिन् लोकानां भिन्नवाक्यता जाता। कतिपयलोकास्तं धर्त्तुम् ऐच्छन् ४४
तथापि तद्वपुषि कोपि हस्तं नार्पयत्।

४५　अनन्तरं पदातिगणे प्रधानयाजकानां फिरूशीनाञ्च समीपमागत-
४६ वति ते तान् अपृच्छन् कुतोहेतोस्तं नानयत? तदा पदातयः प्रत्यवदन् स
४७ मानव इव कोपि कदापि नोपादिशत्। ततः फिरूशयः प्रावोचन् यूयमपि
४८ किमभ्रामिष्ट? अधिपतीनां फिरूशीनाञ्च कोपि किं तस्मिन् व्यश्वसीत्? ये
४९ शास्त्रं न जानन्ति तइमेऽधमलोकाएव शापग्रस्ताः। तदा निकदीमनामा
५० तेषामेको यो क्षणदायां यीशोः सन्निधिम् अगात् स उक्तवान् तस्य वाक्ये
५१ न श्रुते कर्म्मणि च न विदिते ऽस्माकं व्यवस्था किं कञ्चन मनुजं दोषी-
५२ करोति? ततस्ते व्याहरन् त्वमपि किं गालीलीयलोकः? विविच्य पश्य
५३ गालीलि कोपि भविष्यद्वादी नोत्पद्यते। ततःपरं सर्व्वे स्वं स्वं गृहं गताः
किन्तु यीशु जैतुननामानं शिलोच्चयं गतवान्।

---

## ८ अष्टमोध्यायः।

१ एकस्या व्यभिचारिण्या मोचनं १२ भाण्डागार उपदेशः २१ यिहूदीयैः साकं विवदनं ३० इब्राहीमि कथनं ४८ स्वनिर्दोषत्वप्रकटनं मन्दिराद्गमनञ्च।

१　प्रत्यूषे यीशुः पुनर्मन्दिरम् आगच्छत् ततः सर्व्वेषु लोकेषु तस्य
२ समीपम् आगतेषु स उपविश्य तान् उपदेष्टुम् आरभत। तदा अध्या-
३ पकाः फिरूशिनश्च व्यभिचारकर्म्मणि धृतां स्त्रियमेकाम् आनीय सर्व्वेषां
४ मध्ये स्थापयित्वा व्याहरन्, हे गुरो योषितम् इमां व्यभिचारकर्म्म
५ कुर्व्वाणां लोका धृतवन्तः, एतादृशलोकः पाषाणाघातेन हन्तव्य इति विधि
६ र्मूसाव्यवस्थाग्रन्थे लिखितोस्ति किन्तु भवान् किमादिशति? ते तमपवदितुं
परीक्षाभिप्रायेण वाक्यमिदम् अपृच्छन् किन्तु स प्रह्वीभूय भूमावङ्गुल्या
७ लेखितुम् आरभत। ततस्तैः पुनः पुनः पृष्टः उत्थाय कथितवान् युष्माकं
८ मध्ये यो जनो निरपराधी सएव प्रथमम् एनां पाषाणेनाहन्तु। पश्चात् स
९ पुनश्च प्रह्वीभूय भूमौ लेखितुम् आरभत। तां कथां श्रुत्वा ते स्वस्वमनसि
प्रबोधं प्राप्य ज्येष्ठानुक्रमं एकैकशः सर्व्वे वहिरगच्छन् ततो यीशुरेकाकी
१० त्यक्तोभवत् मध्यस्थाने दण्डायमाना सा योषा च स्थिता। तत्पश्चाद्
यीशुरुत्थाय तां वनितां विना कमप्यपरं न विलोक्य पृष्टवान् हे वामे

तवापवादकाः कुत्र? कोपि त्वां किं न दण्डयति? सावदत् हे महेच्छ ११
कोपि न; तदा यीशुरवोचत् नाहमपि दण्डयामि याहि पुनः पापं मा
कार्षीः।

ततो यीशुः पुनरपि लोकेभ्य इत्थं कथयितुम् आरभत जगतोहं १२
ज्योतिःस्वरूपो यः कश्चिन् मत्पश्चाद् गच्छति स तिमिरे न भ्रमित्वा
जीवनरूपां दीप्तिं प्राप्स्यति। ततः फिरूशिनोऽवादिषुस्त्वं स्वार्थे स्वयं १३
साक्ष्यं ददासि तस्मात् तव साक्ष्यं ग्राह्यं न भवति। तदा यीशुः १४
प्रत्युदितवान् यद्यपि स्वार्थेऽहं स्वयं साक्ष्यं ददामि तथापि मत्साक्ष्यं
ग्राह्यं यस्माद् अहं कुत आगतोस्मि क्व यामि इत्यहं जानामि किन्तु
कुत आगतोस्मि कुत्र गच्छामि तद् यूयं न जानीथ। यूयं लौकिकं १५
विचारयथ नाहं किमपि विचारयामि। किन्तु यदि विचारयामि तर्हि १६
मम विचारो ग्रहीतव्यो यतोहम् एकाकी नास्मि प्रेरयिता पिता मया
सह विद्यते। अपरञ्च द्वयो र्जनयोः साक्ष्यं ग्रहणीयं भवतीति युष्माकं १७
व्यवस्थाग्रन्थे लिखितमस्ति। अहं स्वार्थे स्वयं साक्षित्वं ददामि यश्च मम १८
तातो मां प्रेरितवान् सोपि मदर्थे साक्ष्यं ददाति। तदा तेऽपृच्छन् तव १९
तातः कुत्र? ततो यीशुः प्रत्यवादीद् यूयं मां न जानीथ मत्पितरञ्च न
जानीथ यदि माम् अज्ञास्यत तर्हि मम तातमप्यज्ञास्यत। यीशु र्मन्दिर २०
उपदिश्य भाण्डागारे कथा एता अकथयत् तथापि तं प्रति कोपि करं
नोदतोलयत्।

ततःपरं यीशुः पुनरुदितवान् अधुनाहं गच्छामि यूयं मां गवेष- २१
यिष्यथ किन्तु निजैः पापै र्मरिष्यथ यत्स्थानम् अहं यास्यामि तत्स्थानं
यूयं यातुं न शक्ष्यथ। तदा यिहूदीयाः प्रावोचन् किमयम् आत्मघातं २२
करिष्यति यतो यत्स्थानम् अहं यास्यामि तत्स्थानं यूयं यातुं न शक्ष्यथ
इति वाक्यं ब्रवीति। ततो यीशुस्तेभ्यः कथितवान् यूयम् अधः- २३
स्थानीया लोका अहम् ऊर्द्ध्वस्थानीयो यूयम् एतज्जगत्सम्बन्धीया अहम्
एतज्जगत्सम्बन्धीयो न; तस्मात् कथितवान् यूयं निजैः पापै र्मरिष्यथ २४

यतोऽहं स पुमान् इति यदि न विश्वसिथ तर्हि निजैः पापैर्मरिष्यथ।
२५ तदा तेऽपृच्छन् कस्त्वं? ततो यीशुः कथितवान् युष्माकं सन्निधौ
२६ यस्य प्रस्तावम् आ प्रथमात् करोमि सएव पुरुषोऽहं। युष्मासु मया
बहुवाक्यं वक्तव्यं विचारयितव्यञ्च किन्तु मत्प्रेरयिता सत्यवादी तस्य
२७ समीपे यदहं श्रुतवान् तदेव जगते कथयामि। किन्तु स जनके
२८ वाक्यमिदं प्रोक्तवान् इति ते नाबुध्यन्त। ततो यीशुरकथयद् यदा
मनुष्यपुत्रम् ऊर्द्ध्व उत्थापयिष्यथ तदाहं स पुमान् केवलः स्वयं किमपि
कर्म्म न करोमि किन्तु तातो यथा शिक्षयति तदनुसारेण वाक्यमिदं
२९ वदामीति च यूयं ज्ञातुं शक्ष्यथ। अपरञ्च मत्प्रेरयिता पिता माम्
एकाकिनं न त्यजति स मया सार्द्धं तिष्ठति यतोऽहं तदभिमतं कर्म्म
सदा करोमि।
३० तदा तस्यैतानि वाक्यानि श्रुत्वा बहवस्तस्मिन् व्यश्वसन्। तत्र ये यिहूदीया
३१ व्यश्वसन् यीशुस्तेभ्योऽकथयत् मम वाक्ये यदि यूयम् आस्थां कुरुत तर्हि मम
३२ शिष्या भूत्वा सत्यत्वं ज्ञास्यथ; ततः सत्यतया युष्माकं मोक्षो भविष्यति। तदा
३३ ते प्रत्यवादिषुः, वयम् इब्राहीमो वंशः कदापि कस्यापि दासा न जाताः
३४ तर्हि युष्माकं मुक्तिर्भविष्यतीति वाक्यं कथं ब्रवीषि? तदा यीशुः प्रत्यवदद्
३५ युष्मानहं यथार्थतरं वदामि यः पापं करोति स पापस्य दासः। दासश्च
३६ निरन्तरं निवेशने न तिष्ठति किन्तु पुत्रो निरन्तरं तिष्ठति। अतः पुत्रो
३७ यदि युष्मान् मोचयति तर्हि नितान्तमेव मुक्ता भविष्यथ। यूयम् इब्रा-
हीमो वंश इत्यहं जानामि किन्तु मम कथा युष्माकम् अन्तःकरणेषु
३८ स्थानं न प्राप्नुवन्ति तस्माद्धेतो र्मां हन्तुम् ईहध्वे। अहं स्वपितुः समीपे
यदपश्यं तदेव कथयामि तथा यूयमपि स्वपितुः समीपे यदपश्यत
३९ तदेव कुरुध्वे। तदा ते प्रत्यवोचन् इब्राहीम् अस्माकं पिता ततो यीशुर-
कथयद् यदि यूयम् इब्राहीमः सन्ताना अभविष्यत तर्हि इब्राहीम आच-
४० रणवन् आचरिष्यत। ईश्वरस्य मुखात् सत्यं वाक्यं श्रुत्वा युष्मान् ज्ञाप-
४१ यामि योऽहं तं मां हन्तुं चेष्टध्वे, इब्राहीम् एतादृशं कर्म्म न चकार। यूयं

स्वस्वपितुः कर्म्माणि कुरुथ ; तदा तैरुक्तं न वयं जारजाता अस्माकम् एकएव
पितास्ति सएवेश्वरः। ततो यीशुना कथितम् ईश्वरो यदि युष्माकं तातो- ४२
भविष्यत् तर्हि यूयं मयि प्रेमाकरिष्यत यतोहम् ईश्वरान्निर्गत्यागतोस्मि
स्वतो नागतोहं स मां प्राहिणोत्। यूयं मम वाक्यमिदं न बुध्यध्वे कुतः? ४३
यतो यूयं ममोपदेशं सोढुं न शक्नुथ। यूयं शैतान् पितुः सन्ताना एतस्माद् ४४
युष्माकं पितुरभिलाषं पूरयथ; स आ प्रथमात् नरघाती तदन्तः
सत्यस्य लेशोपि नास्ति कारणादतः स सत्यतायां नातिष्ठत्; स यदा मृषा
कथयति तदा निजस्वभावानुसारेणैव कथयति यतो मृषाभाषी मृषो-
त्पादकश्च। अहं तथ्यवाक्यं वदामि कारणादस्माद् यूयं मां न प्रतीथ। मयि ४५
पापमस्तीति प्रमाणं युष्माकं को दातुं शक्नोति? यद्यहं तथ्यवाक्यं ४६
वदामि तर्हि कुतो मां न प्रतीथ? यः कश्चन ईश्वरीयो लोकः स ईश्वरीय- ४७
कथायां मनो निधत्ते यूयम् ईश्वरीयलोका न भवथ तन्निदानात् तत्र न
मनांसि निधद्ध्वे।

तदा यिहूदीयाः प्रत्यवादिषुः त्वमेकः शोमिरोणीयो भूतग्रस्तश्च वयं ४८
किमिदं भद्रं नावादिष्म? ततो यीशुः प्रत्यवादीत् नाहं भूतग्रस्तः किन्तु ४९
निजतातं सम्मन्ये तस्माद् यूयं माम् अपमन्यध्वे। अहं स्वसुख्यातिं न चेष्टे ५०
किन्तु चेष्टिता विचारयिता चापर एक आस्ते। अहं युष्मभ्यम् अतीव- ५१
यथार्थं कथयामि यो नरो मदीयां वाचं मन्यते स कदाचन निधनं न
द्रक्ष्यति। यिहूदीयास्तमवदन् त्वं भूतग्रस्त इतीदानीम् अवैष्म इब्राहीम् ५२
भविष्यद्वादिनश्च सर्व्वे मृताः किन्तु त्वं भाषसे यो ना मम भारतीं गृह्णाति
स जातु निधनास्वादं न लप्स्यते। तर्हि त्वं किम् अस्माकं पूर्व्वपुरुषाद् ५३
इब्राहीमोपि महान्? यस्मात् सोपि मृतः, भविष्यद्वादिनोपि मृताः,
त्वं स्वं कं पुमांसं मनुषे? यीशुः प्रत्यवोचद् यद्यहं स्वं स्वयं सम्मन्ये ५४
तर्हि मम तत् सम्मननं किमपि न किन्तु मम तातो यं यूयमीश्वरं भाषध्वे
सएव मां सम्मनुते। यूयं तं नावगच्छथ किन्त्वहं तमवगच्छामि तं नाव- ५५
गच्छामीति वाक्यं यदि वदामि तर्हि यूयमिव मृषाभाषी भवामि;

५६ किन्त्वहं तमवगच्छामि तदाज्ञामपि गृह्लामि। युष्माकं पूर्व्वपुरुष इब्रा-
५७ हीम् मम समयं द्रष्टुम् अतीवावाञ्छत् तन्निरीक्ष्यानन्दच्च। तदा
यिहूदीया अपृच्छन् तव वयः पञ्चाशद्वत्सरा न त्वं किम् इब्राहीमम्
५८ अद्राक्षीः? यीशुः प्रत्यवादीद् युष्मानहं यथार्थतरं वदामि इब्राहीमो
५९ जन्मनः पूर्व्वकालमारभ्याहं विद्ये। तदा ते पाषाणान् उत्तोल्य तमाहन्तुम्
उदयच्छन् किन्तु यीशु र्गुप्तो मन्दिराद् वहिर्गत्वा तेषां मध्येन प्रस्थितवान्।

---

## ९ नवमोऽध्यायः।

१ जन्मान्ध चक्षुर्दानं ८ तस्मात्लोकानामाश्चर्य्यज्ञानं १३ फिरूशीनां समीपमन्धस्या-
नयनं १८ तस्य पित्रोः कथा। २४ फिरूशीनां कथा ३५ अन्धस्यापगमनं तस्य
यीशुसाक्षात्कारश्च।

१ ततःपरं यीशु र्गच्छन् मार्गमध्ये जन्मान्धं नरम् अपश्यत्। ततः शिष्यास्तम्
२ अपृच्छन् हे गुरो नरोयं स्वपापेन वा स्वपित्रोः पापेनान्धोऽजायत? ततः
३ स प्रत्युदितवान् एतस्य वास्य पित्रोः पापाद् एतादृशोभूद् इति नहि
४ किन्त्वनेन यथेश्वरस्य कर्म्म प्रकाश्यते तद्धेतोरेव। दिनेषु तिष्ठत्सु मत्प्रेरयितुः
कर्म्म मया कर्त्तव्यं यदा किमपि कर्म्म न क्रियते तादृशी निशागच्छति।
५ अहं यावत्कालं जगति तिष्ठामि तावत्कालं जगतो ज्योतिःस्वरूपोस्मि।
६ इत्युक्त्वा भूमौ निष्ठीवं निक्षिप्य तेन पङ्कं कृतवान्; पश्चात् तत्पङ्केन तस्या-
७ न्धस्य नेत्रे प्रलिप्य तमित्यादिशत्, गत्वा शिलोहे ऽर्थात् प्रेरितनाम्नि सरसि
स्नाहि। ततोन्धो गत्वा तत्रास्नात् ततः प्रसन्नचक्षु र्भूत्वा व्याघुट्यागात्।
८ ततःपरं समीपवासिनो लोका ये च तं पूर्व्वमन्धम् अपश्यन् ते वक्तुम्
आरभन्त योन्धलोको वर्त्मन्युपविश्याभिक्षत स एवायं जनो किं न भवति?
९ केचिदवदन् स एव केचिदवोचन् तादृशो भवति किन्तु स स्वयमब्रवीत्
१० स एवाहं भवामि। अतएव ते ऽपृच्छन् त्वं कथं दृष्टिम्प्राप्तवान्? ततः
११ सोवदद् यीशुनामक एको जनो मम नयने पङ्केन प्रलिप्य इत्याज्ञापयत्
१२ शिलोहकासारं गत्वा तत्र स्नाहि। ततस्तत्र गत्वा मयि स्नाते दृष्टिमहं
लब्धवान्। तदा ते ऽवदन् स पुमान् कुत्र? तेनोक्तं नाहं जानामि

अपरञ्च तं पूर्व्वान्धं जनं फिरूशिनां निकटम् आनयन् ततः फिरू- १३
शिनोऽपि तमपृच्छन् कथं दृष्टिं प्राप्तोसि? ततः स कथितवान् स पङ्केन मम १४
नेत्रे ऽलिम्पत् पश्चात् स्नात्वा दृष्टिमलभे। किन्तु यीशु विश्रामवारे कर्द्दमं १५
कृत्वा तस्य नयने प्रसन्ने ऽकरोद् इतिकारणात् कतिपयफिरूशिनोऽवदन् स
पुमान् ईश्वरान्न, यतः स विश्रामवारं न मन्यते। ततोन्ये केचित् प्रत्यवदन् १६
पापी पुमान् किम् एतादृशम् आश्चर्य्यं कर्म्म कर्त्तुं शक्नोति? इत्थं तेषां पर-
स्परं भिन्नवाक्यत्वम् अभवत्। पश्चात् ते पुनरपि तं पूर्व्वान्धं मानुषम् १७
अप्राक्षुः यो जनस्तव चक्षुषी प्रसन्ने कृतवान् तस्मिन् त्वं किं वदसि? स
उक्तवान् स भविष्यद्वादी।

स दृष्टिम् आप्तवान् इति यिहूदीयास्तस्य दृष्टिं प्राप्तस्य जनस्य पित्रो १८
र्मुखाद् अश्रुत्वा न प्रत्ययन्। अतएव ते तान् अपृच्छन् युवयो र्यं पुत्रं १९
जन्मान्धं वदथः स किमयं? तर्हीदानीं कथं द्रष्टुं शक्नोति? ततस्तस्य पितरौ २०
प्रत्यवोचताम् अयम् आवयोः पुत्र आजनेरन्धश्च तदप्यावां जानीवः; किन्तु २१
अधुना कथं दृष्टिं प्राप्तवान् तदावां न जानीवः, कोस्य चक्षुषी प्रसन्ने कृत-
वान् तदपि न जानीव एष वयःप्राप्त एनं पृच्छत स्वकथां स्वयं वक्ष्यति।
यिहूदीयानां भयात् तस्य पितरौ वाक्यमिदम् अवदतां यतः कोपि २२
मनुष्यो यदि यीशुम् अभिषिक्तं वदति तर्हि स भजनगृहाद् दूरी-
कारिष्यते यिहूदीया इति मन्त्रणाम् अकुर्व्वन्; अतस्तस्य पितरौ व्याहृ- २३
रताम् एष वयःप्राप्त एनं पृच्छत।

तदा ते पुनश्च तं पूर्व्वान्धम् आहूय व्याहरन् ईश्वरस्य गुणान् वद एष २४
मनुष्यः पापीति वयं जानीमः। तदा स उक्तवान् स पापी न वेति नाहं २५
जाने। पूर्व्वमन्ध आसमहम् अधुना पश्यामीति मात्रं जानामि। ते पुनर- २६
पृच्छन् स त्वां प्रति किमकरोत्? कथं नेत्रे प्रसन्ने ऽकरोत्? ततः सोवादीद् २७
एककृत्वोकथयं यूयं न शृणुथ तर्हि कुतः पुनः श्रोतुम् इच्छथ? यूयमपि
किं तस्य शिष्या भवितुम् इच्छथ? तदा ते तं तिरस्कृत्य व्याहरन् त्वं तस्य २८
शिष्यो वयं मूसाः शिष्याः। मूसावक्त्रेणेश्वरो जगाद तज्जानीमः किन्तु २९

३० एष कुत्रत्यलोक इति न जानीमः। सोवदद् एष मम लोचने प्रसन्ने
ऽकरोत् तथापि कुत्रत्यलोक इति यूयं न जानीथ, एतद् आश्चर्य्यं भवति।
३१ ईश्वरः पापिनां कथां न शृणोति, किन्तु यो जनस्तस्मिन् भक्तिं कृत्वा तदि-
३२ ष्टक्रियां करोति तस्यैव कथां शृणोति, एतद् वयं जानीमः। कोपि
मनुष्यो जन्मान्धाय चक्षुषी अददात्, जगदारम्भाद् एतादृशीं कथां कोपि
३३ कदापि नाशृणोत्। अस्माद् एष मनुष्यो यदीश्वरान्नाजायत तर्हि
३४ किञ्चिदपीदृशं कर्म्म कर्त्तुं नाशक्नोत्। ते व्याहरन् त्वं सम्पूर्णपापाद् अजा-
यथाः किमस्मान् त्वं शिक्षयसि? पश्चात्ते तं बहिरकुर्व्वन्।
३५ तदनन्तरं यिहूदीयैः स बहिरक्रियत यीशुरिति वार्त्तां श्रुत्वा तं साक्षात्
३६ प्राप्य पृष्टवान् ईश्वरस्य पुत्रे त्वं विश्वसिषि? तदा स प्रत्यवोचत् हे प्रभो
३७ स को यत् तस्मिन्नहं विश्वसिमि? ततो यीशुः कथितवान् त्वं तं दृष्टवान्
३८ त्वया सार्कं यः कथां कथयति स एव सः। तदा हे प्रभो विश्वसिमि, इत्युक्त्वा
३९ स तम् प्राणमत्। पश्चाद् यीशुः कथितवान् नयनहीना नयनानि प्राप्नु-
४० वन्ति नयनवन्तश्चान्धा भवन्तीत्यभिप्रायेण जगदहम् आगच्छम्। एतत्
४१ श्रुत्वा निकटस्थाः कतिपयाः फिरूशिनो व्याहरन् वयमपि किमन्धाः? तदा
यीशुरवादीद् यद्यन्धा अभवत तर्हि पापानि नातिष्ठन् किन्तु पश्यामीति
वाक्यवदनाद् युष्माकं पापानि तिष्ठन्ति।

---

१० दशमोध्यायः।

१ ख्रीष्टेन स्वस्य मेषगृहद्वारस्वरूपस्य दर्शनं ६ तस्य तात्पर्य्यं ११ स्वस्य मेषव्रजस्वरूपस्य दर्शनम् १९ ख्रीष्टेन सह यिहूदीयानां विवादः २२ लोकानामुपदेशः २९ धर्म्मनयोत्सवगमनञ्च।

१ अहं युष्मानतियथार्थं वदामि यो जनो द्वारेण न प्रविश्य केनाप्यन्येन
२ मेषगृहं प्रविशति स एव स्तेनो दस्युश्च। यो द्वारेण प्रविशति स एव मेष-
३ पालकः। दौवारिकस्तस्मै द्वारं मोचयति मेषगणश्च तस्य वाक्यं शृणोति
४ स निजान् मेषान् स्वस्वनाम्नाहूय बहिः कृत्वा नयति। तथा निजान्
मेषान् बहिः कृत्वा स्वयम् अग्रेसरो गच्छति ततो मेषास्तस्य शब्दं

बुध्यन्ते तस्मात् तस्य पश्चाद् व्रजन्ति; किन्तु परस्य शब्दं न बुध्यन्ते तस्मात् ५
तस्य पश्चान्न गमिष्यन्ति वरं तस्य समीपात् पलायिष्यन्ते।

यीशुस्तेभ्य इमां दृष्टान्तकथाम् अकथयत् किन्तु तेन कथित- ६
कथायास्तात्पर्य्यं ते नाबुध्यन्त। अतो यीशुः पुनरकथयद् युष्मानहं ७
यथार्थतरं व्याहरामि मेषगृहस्य द्वारम् अहमेव। मया न प्रविश्य य ८
आगच्छन् ते स्तेना दस्यवश्च किन्तु मेषास्तेषां कथा नाशृण्वन्। अहमेव ९
द्वारस्वरूपः मया यः कश्चित् प्रविशति स रक्षां प्राप्स्यति तथा वहिरन्तश्च
गमनागमने कृत्वा चरणस्थानं प्राप्स्यति। यो जनस्तेनः स केवलं १०
स्तैन्यवधविनाशान् कर्त्तुमेव समायाति किन्त्वहम् आयु र्दातुम् अर्थात्
बाहुल्येन तदेव दातुम् आगच्छम्।

अहमेव सत्यमेषपालको यस्तु सत्यो मेषपालकः स मेषार्थं प्राण- ११
त्यागं करोति; किन्तु यो जनो मेषपालको न, अर्थाद् यस्य मेषा १२
निजा न भवन्ति, य एतादृशो वैतनिकः स वृकम् आगच्छन्तं
दृष्ट्वा मेषव्रजं विहाय पलायते तस्माद् वृकस्तं व्रजं धृत्वा विकि-
रति। वैतनिकः पलायते यतः स वेतनार्थी मेषार्थन्तु न चिन्तयति। १३
अहमेव सत्यो मेषपालकः पिता मां यथा जानाति, अहञ्च यथा पितरं १४
जानामि, तथा निजान् मेषानपि जानामि मेषाश्च मां जानन्ति १५
अहञ्च मेषार्थं प्राणत्यागं करोमि। अपरञ्च एतद्गृहीयमेषेभ्यो भिन्ना १६
अपि मेषा मम सन्ति ते सकला आनयितव्याः; अपरं ते मम शब्दं
श्रोष्यन्ति तत एको व्रज एको रक्षको भविष्यति। प्राणानहं त्यक्त्वा १७
पुनः प्राणान् ग्रहीष्यामि तस्मात् पिता मयि स्नेहं करोति। कश्चि- १८
ज्जनो मम प्राणान् हन्तुं न शक्नोति किन्तु स्वयं तान् समर्पयामि तान्
समर्पयितुं पुनर्ग्रहीतुञ्च मम शक्तिरास्ते भारमिमं स्वपितुः सकाशात्
प्राप्तोहम्।

अस्मादुपदेशात् पुनश्च यिहूदीयानां मध्ये भिन्नवाक्यता जाता। ततो १९
बहवो व्याहरन् एष भूतग्रस्त उन्मत्तश्च कुत एतस्य कथां शृणुथ? केचिद् २०

२१ अवदन् एतस्य कथा भूतग्रस्तस्य कथावन्न भवन्ति भूतः किम् अन्धाय
चक्षुषी दातुं शक्नोति ?
२२ शीतकाले यिरूशालमि मन्दिरोत्सर्गपर्व्वण्युपस्थिते यीशुः सुले-
२३ मानोऽट्टालिकायां गमनागमने करोति, एतस्मिन् समये यिहूदीयास्तं
२४ वेष्टयित्वा व्याहरन्, अपरान् कति कालान् अस्माकं विचिकित्सां
२५ स्थापयिष्यसि ? यद्यभिषिक्तो भवसि तर्हि तत् स्पष्टं वद । तदा यीशुः प्रत्य-
२६ वदद् अहम् अचकथं किन्तु यूयं न प्रतीथ । निजपितु र्नाम्ना यां यां
क्रियां करोमि सा क्रियैव मम साक्षिस्वरूपा किन्त्वहं पूर्व्वमकथयं यूयं मम
२७ मेषा न भवथ कारणादस्मात् न विश्वसिथ । मम मेषा मम शब्दं शृण्वन्ति
२८ तानहं जानामि ते च मम पश्चाद् गच्छन्ति । अहं तेभ्योऽनन्तायु र्ददामि
२९ ते कदापि न नंक्ष्यन्ति कोपि मम करात् तान् हर्त्तुं न शक्ष्यति । यो
३० मम पिता तान् मह्यं दत्तवान् स सर्व्वस्मात् महान् कोपि मम पितुः करात्
३१ तान् हर्त्तुं न शक्ष्यति । अहं पिता च द्वयोरेकत्वम् । ततो यिहूदीयाः
३२ पुनरपि तं हन्तुं पाषाणान् उदतोलयन् । यीशुः कथितवान् पितुः
सकाशाद् बहून्युत्तमकर्म्माणि युष्माकं समक्षं प्राकाशयं तेषां कस्मात्
३३ कर्म्मणः कारणात् मां पाषाणैराहन्तुम् उद्यताः स्थ ? यिहूदीयाः प्रत्यवदन्
प्रशस्तकर्म्महेतो र्न किन्तु त्वं मानुषः स्वमीश्वरम् उक्त्वा ईश्वरं निन्दसि
३४ कारणादस्मात् त्वां पाषाणै र्हन्मः । तदा यीशुः प्रत्युक्तवान् मया कथितं
३५ यूयम् ईश्वरा एतद्वचनं युष्माकं शास्त्रे लिखितं नास्ति किं ? तस्माद् येषाम्
उद्देशे ईश्वरस्य कथा कथिता ते यदीश्वरगणा उच्यन्ते धर्म्मग्रन्थस्याप्य-
३६ न्यथा भवितुं न शक्यं तर्हि अहम् ईश्वरस्य पुत्र, इतिवाक्यस्य कथनात्
यूयं पित्राभिषिक्तं जगति प्रेरितञ्च पुमांसं कथम् ईश्वरनिन्दकं वदथ ?
३७ यद्यहं पितुः कर्म्म न करोमि तर्हि मां न प्रतीत किन्तु यदि करोमि
३८ तर्हि मयि युष्माभिः प्रत्यये न कृतेऽपि कार्य्ये प्रत्ययः क्रियतां ततो मयि
पितास्तीति पितर्य्यहम् अस्मीति च ज्ञात्वा विश्वसिष्यथ ।
३९ तदा ते पुनरपि तं धर्त्तुम् अचेष्टन्त किन्तु स तेषां करेभ्यो निस्तीर्य्य

पुन र्यर्द्दननद्यास्तटे यत्र पूर्व्वं योहन् अमज्जयत् तत्रागत्य न्यवसत्। ततो ४०
बहवो लोकास्तत्समीपम् आगत्य व्याहरन् योहन् किमप्याश्चर्य्यं कर्म्म ४१
नाकरोत् किन्त्वस्मिन् मनुष्ये या याः कथा अकथयत् ताः सर्व्वाः सत्याः; ४२
तत्र च बहवो लोकास्तस्मिन् व्यश्वसन्।

---

११ एकादशोऽध्यायः।

१ इलियासरः पीडितत्वं ७ तन्निकटे ख्रीष्टस्य गमनं १७ तस्य भगिनीभिः सार्द्धं ख्रीष्टस्य कथनं तस्योत्थापनञ्च ४७ महायाजकफिरूशीनां विपक्षत्वकरणं ५५ निस्तारोत्सवे तं धर्त्तुं चेष्टा च।

अनन्तरं मरियम् तस्या भगिनी मर्था च यस्मिन् वैथनीयाग्रामे वसतः १
तस्मिन् ग्रामे इलियासर्नामा पीडित एक आसीत्। या मरियम् प्रभुं २
सुगन्धितैलेन मर्द्दयित्वा स्वकेशैस्तस्यचरणौ सममार्जत् [१२ अध्यायस्य ३ पदे]
तस्या भ्राता स इलियासर् रोगी। अपरञ्च हे प्रभो भवान् यस्मिन् प्रीयते ३
सएव पीडितोस्ति तस्य भगिन्य इति कथां कथयित्वा प्रेषितवान्। तदा ४
यीशुरिमां वार्त्तां श्रुत्वाकथयत् पीडेयं मरणार्थं न किन्त्वीश्वरस्य
महिमार्थम् ईश्वरपुत्रस्य महिमप्रकाशार्थञ्च जाता। यीशु र्यद्यपि मर्थायां ५
तद्भगिन्याम् इलियासरि चाप्रीयत, तथापि इलियासरः पीडायाः कथां ६
श्रुत्वा यत्र स्थान आसीत् तत्रैव स्थाने दिनद्वयमतिष्ठत्।
ततःपरं स शिष्यानकथयद् वयं पुन र्यिहूदीयप्रदेशं यामः। ततस्ते ७ ८
प्रत्यवदन् हे गुरो स्वल्पदिनानि गतानि यिहूदीयास्त्वां पाषाणै र्हन्तुम्
उद्यतास्तथापि किं पुनस्तत्र यास्यसि। यीशुः प्रत्यवदत् एकस्मिन् ९
दिने किं द्वादशघटिका न भवन्ति? दिवा गच्छन् कोपि न स्खलति
यतः स एतज्जगतो दीप्तिं प्राप्नोति, किन्तु रात्रौ गच्छन् स्खलति यतो- १०
हेतोस्तत्र दीप्ति र्नास्ति। इमां कथां कथयित्वा स तानवदद् अस्माकं बन्धुः ११
इलियासर् निद्रितोभूद् इदानीं तं निद्रातो जागरयितुं गच्छामि।
यीशु र्मृतौ कथामिमां कथितवान् किन्तु विश्रामार्थं निद्रायां कथितवान् १२
इति ज्ञात्वा शिष्या अकथयन्, हे गुरो स यदि निद्राति तर्हि भद्रमेव। १३

१४ तदा यीशुः स्पष्टं तान् व्याहरद् इलियासर् अम्रियत; किन्तु यूयं
१५ यथा प्रतीथ तस्माद् अहं तत्र स्थाने न स्थितवान् इत्यस्माद् युष्म-
१६ न्निमित्तम् आह्लादितोऽहं तथापि तस्य समीपे याम। तदा थोमा यं
दिदुमं वदन्ति स सङ्गिनः शिष्यान् अवदद् वयमपि गत्वा तेन सार्द्धं
म्रियामहै।
१७ तदनन्तरं यीशुस्तत्रोपस्थाय इलियासरः श्मशानगमनस्य चत्वारि
१८ दिनानि गतानीति वार्त्तां श्रुतवान्। अपरञ्च वैथनीया यिरूशालमः समी-
१९ पस्था क्रोशैकमात्रान्तरिता तस्मात् बहवो यिहूदीया मार्थां मरियमञ्च भ्रा-
२० तृशोकापन्नां सान्त्वयितुं तयोः समीपम् आगच्छन्। मर्था यीशोरागमनवार्त्तां
२१ श्रुत्वैव तं साक्षाद् अकरोत् किन्तु मरियम् गेह उपविश्य स्थिता। तदा
मर्था यीशुमवदत् हे प्रभो यदि भवान् अत्रास्थास्यत् तर्हि मम भ्राता
२२ नामरिष्यत्; किन्त्विदानीमपि यद् ईश्वरे प्रार्थयिष्यते ईश्वरस्तद् दास्य-
२३ तीति जानेऽहं। यीशुरवादीत् तव भ्राता समुत्थास्यति। मर्था व्याहरत्
२४ शेषदिवसे स उत्थानसमये प्रोत्थास्यतीति जानेऽहं। तदा यीशुः कथितवान्
२५ अहमेव उत्थापयिता जीवयिता च यः कश्चन मयि विश्वसिति स मृत्वापि
२६ जीविष्यति; यः कश्चन च जीवन् मयि विश्वसिति स कदापि न मरि-
२७ ष्यति, अस्यां कथायां किं विश्वसिषि? सावदत् प्रभो यस्यावतरणापेक्षास्ति
२८ भवान् सएवाभिषिक्त ईश्वरपुत्र इति विश्वसिमि। इति कथां कथयित्वा
सा गत्वा स्वां भगिनीं मरियमं गुप्तमाहूय व्याहरत् गुरुरुपतिष्ठति
२९ त्वामाह्वयति, च कथामिमां श्रुत्वा स तूर्णम् उत्थाय तस्य समीपम् अगच्छत्।
३० यीशुर्ग्राममध्यं न प्रविश्य यत्र स्थाने मर्था तं साक्षाद् अकरोत् तत्र स्थाने
३१ स्थितवान्। अपरञ्च ये यिहूदीया मरियमा साकं गृहे तिष्ठन्तस्ताम्
असान्त्वयन् ते तां क्षिप्रम् उत्थाय गच्छन्तीं विलोक्य व्याहरन् सा श्मशाने
३२ रोदितुं याति, इत्युक्त्वा ते तस्याः पश्चाद् अगच्छन्। तदनन्तरं यत्र स्थाने
यीशुरतिष्ठत् तत्र स्थाने मरियम् उपस्थाय तं दृष्ट्वा तस्य चरणयोः
पतित्वा व्याहरत् हे प्रभो यदि भवान् अत्रास्थास्यत् तर्हि मम भ्राता

नामरिच्यत्। यीशुस्तां तस्याः सङ्गिनो यिहूदीयांश्च रुदतो विलोक्य ३३
शोकार्त्तः सन् दीर्घं निश्वस्य कथितवान् तं कुत्रास्थापयत? ते व्याहरन् ३४
हे प्रभो भवान् आगत्य पश्यतु। यीशुना क्रन्दितं। अतएव यिहूदीया ३५
अवदन् पश्यतायं तस्मिन् कीदृग् अप्रीयत। तेषां केचिद् अवदन् योन्धाय ३६
चक्षुषी दत्तवान् स किम् अस्य मृत्युं निवारयितुं नाशक्नोत्? ततो यीशुः ३७
पुनरन्तर्दीर्घं निश्वस्य श्मशानान्तिकम् आगच्छत् तत् श्मशानम् एकं गह्वरं ३८
तन्मुखे पाषाण एक आसीत्। तदा यीशुरवदद् एनं पाषाणम् अपसारयत ३९
ततः प्रमीतस्य भगिनी मर्थावदत् हे प्रभोऽधुना तत्र दुर्गन्धो जातः यतोद्य
चत्वारि दिनानि श्मशाने स तिष्ठति। तदा यीशुरवादीद् यदि विश्व- ४०
सिषि तर्हीश्वरस्य महिमप्रकाशं द्रक्ष्यसि कथामिमां किं तुभ्यं नाचकथं?
तदा मृतस्य श्मशानात् पाषाणेऽपसारिते यीशुरूर्द्ध्वं पश्यन् अकथयत् ४१
हे पित मम निवेदनम् अशृणोः कारणादस्मात् त्वां धन्यं वदामि। त्वं ४२
सततं शृणोषि तदप्यहं जानामि किन्तु त्वं मां यत् प्रैरयस्तद् यथास्मिन्
स्थाने स्थिता लोका विश्वसन्ति तदर्थम् इदं वाक्यं वदामि। इमां ४३
कथां कथयित्वा स प्रोच्चैराह्वयत् हे इलियासर् वहिरागच्छ। ततः स ४४
प्रमीतश्मशानवस्त्रेण बद्धहस्तपादो गात्रमार्जनवाससाबद्धमुखश्च वहिरा-
गच्छत्। यीशुरुदितवान् बन्धनानि मोचयित्वा त्यजतैनं। मरियमः ४५
समीपम् आगता ये यिहूदीयलोकास्तदा यीशोरेतत् कर्म्म दृष्ट्वा तेषां बहवो
व्यश्वसन्; किन्तु केचिदन्ये फिरूशिनां समीपं गत्वा यीशोरेतस्य कर्म्मणो ४६
वार्त्ताम् अवदन्।

ततःपरं प्रधानयाजकाः फिरूशिनश्च महतीं सभां कृत्वा व्याहरन् वयं ४७
किं कुर्म्मः? एष मानवो बहून्याश्चर्य्यकर्म्माणि करोति। यदीदृशं कर्म्म ४८
कर्त्तुं न वारयामस्तर्हि सर्व्वे लोकास्तस्मिन् विश्वसिष्यन्ति रोमिलोकाश्च
आगत्यास्माकम् अनया राजधान्या सार्द्धं राज्यं उच्छिन्नं करिष्यन्ति।
तदा तेषां कियफानामा यस्तस्मिन् वत्सरे महायाजकपदे न्ययुज्यत स ४९
प्रत्यवदद् यूयं किमपि न जानीथ; समपदेशस्य विनाशतोपि सर्व्वलोकार्थम् ५०

एकस्य जनस्य मरणम् अस्माकं मङ्गलहेतुकम् एतस्य विवेचनामपि न
५१ कुरुथ। एतां कथां स निजबुद्ध्या व्याहरद् इति न किन्तु यीशुस्तद्देशीयानां
५२ कारणात् प्राणान् त्यक्ष्यति, दिशि दिशि विकीर्णान् ईश्वरस्य सन्तानान्
संगृह्यैकजातिं करिष्यति च तस्मिन् वत्सरे कियफा महायाजकत्वपदे
५३ नियुक्तः सन् इदं भविष्यद्वाक्यं कथितवान्। तद्दिनमारभ्य कथं तं हन्तुं
५४ शक्नुवन्तीति मन्त्रणां ते कर्त्तुं प्रारेभिरे। अतएव यिहूदीयानां मध्ये
यीशुः सप्रकाशं गमनागमने अकृत्वा तस्माद् गत्वा प्रान्तरस्य समीपस्था-
यिनः प्रदेशस्येफ्रायिम्नाम्नि नगरे शिष्यैः साकं कालं यापयितुं प्रारेभे।
५५ अनन्तरं यिहूदीयानां निस्तारोत्सवे निकटवर्त्तिनि सति तदुत्सवात्
पूर्व्वं स्वान् शुचीन् कर्त्तुं बहवो जना ग्रामाद् यिरूशालम्नगरम्
५६ आगच्छन्, एवं यीशोरन्वेषणं कृत्वा मन्दिरे दण्डायमानाः सन्तः परस्परं
व्याहरन् युष्माकं कीदृशो बोधो जायते? स किम् उत्सवेऽस्मिन् अत्रागमि-
५७ ष्यति? स च कुत्रास्ति यद्येतत् कश्चिद् वेत्ति तर्हि दर्शयतु प्रधानयाजकाः
फिरूशिनश्च तं धर्त्तुं पूर्व्वम् इमाम् आज्ञां प्राचारयन्।

---

१२ द्वादशोऽध्यायः।

१ यीशोश्चरणयो मरियमा तैलमर्द्दनं ९ इलियासरं द्रष्टुं बहुलोकानामागमनं १२ खीष्टस्य यिरूशालम्गमनं २० खीष्टसमीपेऽन्यदेशीयानामागमनं २३ खीष्टस्य निजनिधनभोगस्य भविष्यद्वाक्यं ३७ अल्पलोकै विश्वसनं ४४ खीष्टस्योपदेशश्च।

१ अपरञ्च निस्तारोत्सवात् पूर्व्वं दिनषट्के स्थिते यीशु र्यं प्रमीतम्
इलियासरं श्मशानाद् उदस्थापयत् तस्य निवासस्थानं वैथनियाग्रामम्
२ आगच्छत्। तत्र स्थाने तदर्थं रजन्यां भोज्ये कृते मर्था पर्य्यवेषयद् इलियास-
३ रस्च तस्य सङ्गिभिः सार्द्धं भोजनासन उपाविशत्। तदा मरियम्
अर्द्धसेटकं बहुमूल्यं जटामांसीयं तैलम् आनीय यीशोश्चरणयो मर्द्दयित्वा
निजकेशै मार्ष्टुम् आरभत; तदा तैलस्य परिमलेन गृहम् आमोदितम्
४ अभवत्। यः शिमोनः पुत्र ईष्कारियोतीयो यिहूदानामा यीशुं पर-
५ करेषु समर्पयिष्यति स शिष्यस्तदा कथितवान्, एतत्तैलं त्रिभिः शतै

मुद्रापादै र्विक्रीतं सद् दरिद्रेभ्यः कुतो नादीयत? स दरिद्रलोकार्थम् ६
अचिन्तयद् इति न किन्तु स चौर एवं तन्निकटे मुद्रासम्पुटकस्थित्या
तन्मध्ये यदतिष्ठत् तदपाहरत् तस्मात् कारणाद् इमां कथामकथयत्।
तदा यीशुरकथयद् एनां मा वारय मम श्मशानस्थापनदिनार्थं तदस्था- ७
पयत्। दरिद्रा युष्माकं सन्निधौ सर्व्वदा तिष्ठन्ति किन्त्वहं सर्व्वदा युष्माकं ८
सन्निधौ न तिष्ठामि।

ततःपरं यीशुस्तत्र स्थानेऽस्तीति वार्त्तां श्रुत्वा बहवो यिहूदी- ९
यास्तं श्मशानादुत्थापितम् इलियासरञ्च द्रष्टुं तत्स्थानम् आगच्छन्। १०
अनन्तरं प्रधानयाजकास्तम् इलियासरं संहर्त्तुम् अमन्त्रयन्; यतस्तेन ११
बहवो यिहूदीया गत्वा यीशौ व्यश्वसन्।

अनन्तरं यीशु र्यिरूशालम नगरम् आगच्छतीति वार्त्तां श्रुत्वा १२
परेऽहनि उत्सवागता बहवो लोकाः खर्ज्जूरपत्राद्यानीय तं साक्षात् कर्त्तुं
बहिरागत्य जय जयेति वाचं प्रोच्चै र्वक्तुम् आरभन्त, इस्रायेलो यो राजा १३
परमेश्वरस्य नाम्नागच्छति स धन्यः। तदा 'हे सीयोनः कन्ये मा भैषीः १४
पश्यायं तव राजा गर्दभशावकम् आरुह्यागच्छति' इति शास्त्रीयवचना- १५
नुसारेण यीशुरेकं युवगर्द्दभं प्राप्य तदुपर्य्यारोहत्। अस्या घटनायास्ता- १६
त्पर्य्यं शिष्याः प्रथमं नाबुध्यन्त किन्तु यीशौ महिमानं प्राप्ते सति वाक्य-
मिदं तस्मिन् अकथ्यत तेपि च तम्प्रतीत्थम् अकुर्व्वन् इति ते स्मृतवन्तः।
अपरञ्च स इलियासरं श्मशानाद् आगन्तुम् आह्वतवान् श्मशानाच्च उद- १७
स्थापयद् ये ये लोकास्तत्कर्म्म साक्षाद् अपश्यन् ते प्रमाणं दातुम् आर-
भन्त। स एतादृशम् अद्भुतं कर्म्माकरोत् तस्य जनश्रुते र्लोकास्तं साक्षात् १८
कर्त्तुम् आगच्छन्। ततः फिरूशिनः परस्परं वक्तुम् आरभन्त युष्माकं सर्व्वा- १९
श्चेष्टा वृथा जाताः, इति किं यूयं न बुध्यध्वे? पश्यत सर्व्वे लोकास्तस्य पश्चा-
द्गामिनोऽभवन्।

अपरञ्च भजनं कर्त्तुम् उत्सवागतानां लोकानां कतिपया जना अन्य- २०
देशीया आसन्, ते गालीलीयबैत्सैदानिवासिनः फिलिपस्य समीपम् २१

२२ आगत्य व्याहरन् हे महेच्छ वयं यीशुं द्रष्टुम् इच्छामः। ततः फिलिपो
गत्वा आन्द्रियम् अवदत् पश्चाद् आन्द्रियफिलिपौ यीशवे वार्त्ताम् अकथ-
२३ यतां। तदा यीशुः प्रत्युदितवान् मानवसुतस्य महिमप्राप्तिसमय
२४ उपस्थितः। अहं युष्मानतियथार्थं वदामि, धान्यबीजं मृत्तिकायां
पतित्वा यदि न म्रियते तर्ह्येकाकि तिष्ठति किन्तु यदि म्रियते तर्हि
२५ बहुगुणं फलं फलति। यो जनो निजप्राणान् प्रियान् जानाति स तान्
हारयिष्यति किन्तु यो जन इहलोके निजप्राणान् अप्रियान् जानाति
२६ सोनन्तायुः प्राप्तुं तान् रक्षिष्यति। कश्चिद् यदि मम सेवको भवितुं वाञ्छति
तर्हि स मम पश्चाद्गामी भवतु तस्माद् अहं यत्र स्थाने तिष्ठामि मम सेव-
कोपि तत्र स्थाने स्थास्यति ; यो जनो मां सेवते मम पितापि तं सम्मंस्यते।
२७ साम्प्रतं मम प्राणा व्याकुला भवन्ति तस्माद् हे पितर् एतत्
समयान्मां रक्ष, इत्यहं किं प्रार्थयिष्ये? किन्त्वहम् एतत्समयार्थम्
२८ अवतीर्णवान्। हे पितः स्वनाम्नो महिमानं प्रकाशय तेनैव स्वनाम्नो महि-
मानम् अहं प्राकाशयं पुनरपि प्रकाशयिष्यामि, एषा गगणीया वाणी
२९ तस्मिन् समयेऽजायत। तच्छ्रुत्वा समीपस्थलोकानां केचिद् अवदन्
मेघोऽगर्जीत् केचिद् अवदन् स्वर्गीयदूतो अनेन सह कथामचकथत्।
३० तदा यीशुः प्रत्यवादीत् मदर्थं शब्दोयं नाभूत् युष्मदर्थमेवाभूत्। अधुना
३१ जगतोस्य विचारः सम्पत्स्यते, अधुनास्य जगतः पती राज्याच्च्योष्यति। अपरञ्च
३२ यद्यहं पृथिव्या ऊर्द्ध्वे प्रोत्थापितोस्मि तर्हि सर्व्वान् मानवान् स्वसमीपम्
३३ आकर्षिष्यामि। कथं तस्य मृति र्भविष्यति, एतद् बोधयितुं स इमां कथाम्
३४ अकथयत्। तदा लोका अकथयन् सोभिषिक्तः सर्व्वदा तिष्ठतीति व्यवस्थाग्रन्थे
श्रुतम् अस्माभिः, तर्हि मनुष्यपुत्रः प्रोत्थापितो भविष्यतीति वाक्यं कथं वदसि?
३५ मनुष्यपुत्रोयं कः? तदा यीशुरकथयद् युष्माभिः सार्द्धम् अल्पदिनानि
ज्योतिरास्ते यथा युष्मान् अन्धकारो नाच्छादयति तदर्थं यावत्कालं
युष्माभिः सार्द्धं ज्योतिस्तिष्ठति तावत्कालं गच्छत; यो जनोऽन्धकारे गच्छति
३६ स कुत्र यातीति न जानाति। अतएव यावत्कालं युष्माकं निकटे ज्योति-

रात्रौ तावत्कालं ज्योतीरूपसन्ताना भवितुं ज्योतिषि विश्वसित; इमां
कथां कथयित्वा यीशुः प्रस्थाय तेभ्यः स्वं गुप्तवान्।

यद्यपि यीशुस्तेषां समक्षम् एतावदाश्चर्य्यकर्म्माणि कृतवान् तथापि ते ३७
तस्मिन् न व्यश्वसन्। अतएव

'कः प्रत्येति सुसंवादं परेशास्मत्प्रचारितं?

प्रकाशते परेशस्य हस्तः कस्य च सन्निधौ?'

यिशायियभविष्यद्वादिना यदेतद् वाक्यमुक्तं तत् सफलम् अभवत्। ३८
अपरञ्च ते प्रत्येतुं नाशक्नुवन् तस्मिन् यिशायियभविष्यद्वादी पुनरवादीद्, ३९
यथा 'ते नयनै र्न पश्यन्ति बुद्धिभिश्च न बुध्यन्ते तै र्मनःसु परिवर्त्तितेषु ४०
च तानहं यथा स्वस्थान् न करोमि तथा स तेषां लोचनान्यन्धानि
कृत्वा तेषामन्तःकरणानि गाढानि करिष्यति'। यिशायियो यदा यीशो- ४१
र्महिमानं विलोक्य तस्मिन् कथामकथयत् तदा भविष्यद्वाक्यम् ईदृशं
प्राकाशयत्। तथाप्यधिपतीनां बहवस्तस्मिन् प्रत्ययम् अकुर्व्वन्। किन्तु ४२
फिरूशिनस्तान् भजनगृहाद् दूरीकुर्व्वन्तीति भयात् ते तं न स्वीकृतवन्तः। ४३
यत ईश्वरस्य प्रशंसातो मानवानां प्रशंसायां तेऽप्रीयन्त।

तदा यीशुरुच्चैःकारम् अकथयद् यो जनो मयि विश्वसिति स केवले ४४
मयि विश्वसितीति न स मत्प्रेरकेऽपि विश्वसिति। यो जनो मां ४५
पश्यति स मत्प्रेरकमपि पश्यति। यो जनो मां प्रत्येति स यथान्धकारे न ४६
तिष्ठति तदर्थम् अहं ज्योतिःस्वरूपो भूत्वा जगत्यस्मिन् अवतीर्णवान्।
मम कथां श्रुत्वा यदि कश्चिन् न विश्वसिति तर्हि तमहं दोषिणं न ४७
करोमि यतो हेतो र्जगतो जनानां दोषान् निश्चितान् कर्त्तुं नागत्य तान्
परित्रातुम् आगतोस्मि। यः कश्चिन् मां न श्रद्धाय मम कथां न गृह्णाति ४८
अन्या तस्य दोषान् निश्चितान् करिष्यति वस्तुतस्तु यां कथामहम् अच-
कथम् सा कथा चरमेऽह्नि तं दोषिणं करिष्यति। यतोहेतोरहं स्वतः ४९
किमपि न कथयामि किं किं मया कथयितव्यं किं समुपदेष्टव्यञ्च
इति मत्प्रेरयिता पिता मामाज्ञापयत्। अपरञ्च तस्य साज्ञा अनन्तायुः ५०

इत्यहं जानामि; अतएवाहं यत् कथयामि तत् पिता यथाज्ञापयत् तथैव
कथयाम्यहम्।

---

## १३ त्रयोदशोऽध्यायः।

१ ख्रीष्टेन स्वशिष्याणां चरणक्षालनं १२ तस्य तात्पर्य्यं २१ यिहूदाविश्वासघाती भविष्यतीति ज्ञापनं ३१ शिष्येभ्यः ख्रीष्टस्योपदेशः ३६ पितरस्यानङ्गीकार-ज्ञापनञ्च।

१ अपरञ्च निस्तारोत्सवस्य किञ्चित्कालात् पूर्व्वं पृथिव्याः पितुः समीप-
गमनस्य समयः सन्निकर्षोऽभूद् इति ज्ञात्वा यीशुराप्रथमात् येष्वात्मीय-
२ लोकेषु प्रेम करोति तेषु शेषं यावत् प्रेम कृतवान्। अपरञ्च पिता तस्य
हस्ते सर्व्वं समर्पितवान्, स्वयम् ईश्वरस्य समीपाद् आगच्छद् ईश्वरस्य
३ समीपं यास्यति च सर्व्वाण्येतानि ज्ञात्वा रजन्यां भोजने सम्पूर्णे सति, यदा
शैतान् तं परहस्ते समर्पयितुं शिमोनः पुत्रस्य ईष्कारियोतीयस्य यिहूदा
४ अन्तःकरणे कुप्रवृत्तिं समार्पयत्, तदा यीशु र्भोजनासनाद् उत्थाय गात्रवस्त्रं
५ मोचयित्वा गात्रमार्जनवस्त्रं गृहीत्वा तेन स्वकटिम् अबध्नात्। पश्चाद्
एकपात्रे जलम् अभिषिच्य शिष्याणां पादान् प्रक्षाल्य तेन कटिबद्धगात्र-
६ मार्जनवाससा मार्ष्टुं प्रारभत। ततः शिमोन्पितरस्य समीपमागते स
७ उक्तवान् हे प्रभो भवान् किं मम पादौ प्रक्षालयिष्यति? यीशुरुदितवान्
८ अहं यत् करोमि तत् सम्प्रति न जानासि किन्तु पश्चाज् ज्ञास्यसि। ततः
पितरः कथितवान् भवान् कदापि मम पादौ न प्रक्षालयिष्यति।
यीशुरकथयद् यदि त्वां न प्रक्षालये तर्हि मयि तव कोप्यंशो
९ नास्ति। तदा शिमोन्पितरः कथितवान् हे प्रभो तर्हि केवलपादौ न मम
१० हस्तौ शिरश्च प्रक्षालयतु। ततो यीशुरकथयद् यो जनो धौतस्तस्य
११ सर्व्वाङ्गपरिष्कृतत्वात् पादौ विनान्यस्य प्रक्षालनापेक्षा नास्ति। यूयं परि-
ष्कृता इति सत्यं किन्तु न सर्व्वे यतो यो जनस्तं परकरेषु समर्पयिष्यति तं
स ज्ञातवान्; अतएव यूयं सर्व्वे न परिष्कृता इमां कथां कथितवान्।
१२ इत्थं यीशुस्तेषां पादान् प्रक्षाल्य वस्त्रं परिधायासने समुपविश्य कथि-
१३ तवान् अहं युष्मान् प्रति किं कर्म्माकार्षं जानीथ? यूयं मां गुरुं प्रभुञ्च वदथ

तत् सत्यमेव वदथ यतोऽहं सएव भवामि। यद्यहं प्रभु र्गुरुश्च सन् युष्माकं १४
पादान् प्रक्षालितवान् तर्हि युष्माकमपि परस्परं पादप्रक्षालनम् उचितम्।
अहं युष्मान् प्रति यथा व्यवाहरं युष्मान् तथा व्यवहर्त्तुम् एकं पन्थानं १५
दर्शितवान्। अहं युष्मानतियथार्थं वदामि प्रभो र्दासो न महान् प्रेरकाच्च १६
प्रेरितो न महान्। इमां कथां विदित्वा यदि कर्म्माणि कुरुथ तर्हि यूयं १७
धन्या भविष्यथ। सर्व्वेषु युष्मासु कथामिमां कथयामि इति न ये मम १८
मनोनीतास्तानहं जानामि किन्तु

मम भक्ष्याणि यो भुङ्क्ते मदीयप्रातिकूल्यतः।
उत्थापयति पादस्य मूलं सोपिहि मानवः।

यदेतद् धर्म्मपुस्तकस्य वचनं तदनुसारेणावश्यं घटिष्यते। अहं स जन इत्यत्र १९
यथा युष्माकं विश्वासो जायते तदर्थं एतादृग्घटनात् पूर्व्वम् अहमिदानीं
युष्मभ्यमकथयम्। अहं युष्मानतीवयथार्थं वदामि मया प्रेरितं जनं यो २०
जनो गृह्लाति स मामेव गृह्लाति यश्च मां गृह्लाति स मत्प्रेरकं गृह्लाति।

एतां कथां कथयित्वा यीशु र्दुःखी सन् प्रमाणं दत्त्वा कथितवान् अहं २१
युष्मानतियथार्थं वदामि युष्माकम् एको जनो मां परकरेषु समर्पयि-
ष्यति। ततः स कमुद्दिश्य कथामेतां कथितवान् इत्यत्र सन्दिग्धाः शिष्याः २२
परस्परं मुखमालोकयितुं प्रारभन्त। तस्मिन् समये यीशु र्यस्मिन् अप्री- २३
यत स शिष्यस्तस्य वक्षस्थलम् अवालम्बत। शिमोन्पितरस्तं सङ्केतेनावदद् २४
अयं कमुद्दिश्य कथामेताम् कथयतीति पृच्छ। तदा स यीशो र्वक्षस्थ- २५
लम् अवलम्ब्य पृष्टवान् हे प्रभो स जनः कः? ततो यीशुः प्रत्यवदद् एक- २६
खण्डं पूपं मज्जयित्वा यस्मै दास्यामि सएव स; पश्चात् पूपखण्डमेकं मज्ज-
यित्वा शिमोनः पुत्राय ईष्कारियोतीयाय यिहूदै दत्तवान्। तस्मिन् दत्ते २७
सति शैतान् तमाश्रयत्; तदा यीशुस्तम् अवदत् त्वं यत् करिष्यसि तत्
क्षिप्रं कुरु। किन्तु स येनाशयेन तां कथामकथयत् तं उपविष्टलोकानां २८
कोपि बोद्धुं नाशक्नोत्, किन्तु यिहूदाः समीपे मुद्रासम्पुटकस्थितेः केचिद् २९
इत्थम् अबुध्यन्त पार्व्वणासादनार्थं किमपि द्रव्यं क्रेतुं वा दरिद्रेभ्यः किञ्चिद्

३० वितर्त्तुं कथितवान्। तदा पूपखण्डग्रहणात् परं स तूर्णं वहिरगच्छत्
रात्रिश्च समुपस्थिता।
३१ यिहूदे वहिर्गते यीशुरकथयद् इदानीं मानवसुतस्य महिमा प्रका-
३२ शते तेनेश्वरस्यापि महिमा प्रकाशते। यदि तेनेश्वरस्य महिमा प्रकाशते
तर्हीश्वरोपि स्वेन तस्य महिमानं प्रकाशयिष्यति तूर्णमेव प्रकाशयिष्यति।
३३ हे वत्सा अहं युष्माभिः सार्द्धं किञ्चित्कालमात्रम् आसे; ततःपरं मां
मृगयिष्यध्वे किन्त्वहं यत्स्थानं यामि तत् स्थानं यूयं गन्तुं न शक्ष्यथ
यामिमां कथां यिहूदीयेभ्यः कथितवान् तथाधुना युष्मभ्यमपि कथयामि।
३४ यूयं परस्परं प्रीयध्वम् अहं युष्मासु यथाप्रीये यूयमपि परस्परम् तथैव
३५ प्रीयध्वं युष्मान् इमं नवीनं वाक्यम् आदिशामि। तेनैव यदि परस्परं
प्रीयध्वे तर्हि लक्षणेनानेन यूयं मम शिष्या इति सर्व्वे ज्ञातुं शक्ष्यन्ति।
३६ शिमोन्पितरः पृष्टवान् हे प्रभो भवान् कुत्र यास्यति? ततो यीशुः
प्रत्यवदद् अहं यत्स्थानं यामि तत्स्थानं साम्प्रतं मम पश्चाद् गन्तुं न शक्नुथ
३७ किन्तु पश्चाद् गमिष्यथ। तदा पितरः प्रत्युदितवान् हे प्रभो साम्प्रतं
३८ कुतो हेतोस्तव पश्चाद् गन्तुं न शक्नोमि? त्वदर्थं प्राणान् दातुं शक्नोमि। ततो
यीशुः प्रत्युक्तवान् मन्निमित्तं किं प्राणान् दातुं शक्नोषि? त्वामहं यथार्थं
वदामि कुक्कुटरवणात् पूर्व्वं त्वं त्रि र्माम् अपह्नोष्यसे।

---

## १४ चतुर्दशोऽध्यायः।

१ शिष्याणां प्रबोधनं ८ तस्य पितुश्चैक्यं १५ प्रबोधयितारं तेषां समीपे प्रेरयितुं प्रतिज्ञा २५ प्रस्थानीया कथा च।

१ मनोदुःखिनो मा भूत, ईश्वरे विश्वसित मयि च विश्वसित। मम पितु-
२ र्गृहे बहूनि वासस्थानानि सन्ति नो चेत् पूर्व्वं युष्मान् अज्ञापयिष्यं युष्म-
३ दर्थं स्थानं सज्जयितुं गच्छामि। अपरञ्च गत्वाहं युष्मन्निमित्तं यदि
स्थानं सज्जयामि तर्हि पुनरागत्य युष्मान् स्वसमीपं नेष्यामि ततो यत्राहं
४ तिष्ठामि तत्र स्थाने यूयमपि स्थास्यथ। अहं यत्स्थानं व्रजामि तत्स्थानं
५ यूयं जानीथ तस्य पन्थानमपि जानीथ। तदा थोमा अवदत् हे प्रभो

भवान् कुत्र याति तद् वयं न जानीमः, तर्हि कथं पन्थानं ज्ञातुं शक्नुमः?
यीशुरकथयद् अहमेव सत्यजीवनरूपपथो मया न गन्ता कोपि पितुः ६
समीपं गन्तुं न शक्नोति। यदि माम् अज्ञास्यत तर्हि मम पितरमप्यज्ञास्यत ७
किन्त्वधुनातस्तं जानीथ पश्यथ च।

तदा फिलिपः कथितवान् हे प्रभो पितरं दर्शय तस्मादस्माकं यथेष्टं ८
भविष्यति। ततो यीशुः प्रत्यवादीत् हे फिलिप युष्माभिः सार्द्धम् एताव- ९
द्दिनानि स्थितमपि मां किं न प्रत्यभिजानासि? यो जनो माम् अपश्यत्
स पितरम् अप्यपश्यत् तर्हि पितरम् अस्मान् दर्शयेति कथां कथं कथयसि?
अहं पितरि तिष्ठामि पिता मयि तिष्ठति, इति किं त्वं न प्रत्येषि? अहं १०
यद्वाक्यं वदामि तत् स्वतो न वदामि किन्तु यः पिता मयि विराजते
स एव सर्व्वकर्म्माणि करोति। अतएव पितर्य्यहं तिष्ठामि पिता च मयि ११
तिष्ठति ममास्यां कथायां प्रत्ययं कुरुत नो चेत् कर्म्महेतोः प्रत्ययं कुरुत।
अहं युष्मानतियथार्थं वदामि यो जनो मयि विश्वसिति सोहमिव कर्म्म १२
करिष्यति वरं ततोपि महाकर्म्म करिष्यति यतो हेतोरहं पितुः समीपं
गच्छामि। यथा पुत्रेण पितु र्महिमा प्रकाशते तदर्थं मम नाम १३
प्रोच्य यत् प्रार्थयिष्यध्वे तत् सफलं करिष्यामि। यदि मम नाम्ना यत् १४
किञ्चिद् याचध्वे तर्हि तदहं साधयिष्यामि।

यदि मयि प्रीयध्वे तर्हि ममाज्ञां गृह्लीत। ततो मया पितुः समीपे १५
प्रार्थिते पिता निरन्तरं युष्माभिः सार्द्धं स्थातुम् एकं प्रबोधयितारम् अर्थात् १६
सत्यमयम् आत्मानं युष्माकं निकटे प्रेषयिष्यति। एतज्जगतो लोकास्तं १७
ग्रहीतुं न शक्नुवन्ति यतस्ते तं नापश्यन् नाजानंश्च किन्तु यूयं तं जानीथ
यतोहेतोः स युष्माकमन्त र्निवसति युष्माकं मध्ये स्थास्यति च। अहं युष्मान् १८
अनाथान् कृत्वा न यास्यामि पुनरपि युष्माकं समीपम् आगमिष्यामि।
अपरञ्च कियत्कालात् परम् अस्य जगतो लोका मां पुन र्न द्रक्ष्यन्ति १९
किन्तु यूयं द्रक्ष्यथ; अहं जीविष्यामि तस्मात् कारणाद् यूयमपि
जीविष्यथ। अपरञ्च पितर्य्यहमस्मि मयि च यूयं स्थ तथाहं युष्मास्वस्मि २०

२१ तदपि तदा ज्ञास्यथ। यो जनो ममाज्ञा गृहीत्वा ता आचरति सएव मयि
प्रीयते यो जनश्च मयि प्रीयते सएव मम पितुः प्रियपात्रं भविष्यति तथा-
२२ हमपि तस्मिन् प्रीत्वा तस्मै स्वं प्रकाशयिष्यामि। तदा ईष्कारियोतीयाद्
अन्यो यिहूदास्तमवदत् हे प्रभो भवान् जगतो लोकानां सन्निधौ प्रकाशितो
२३ न भूत्वास्माकं सन्निधौ कुतः प्रकाशितो भविष्यति? ततो यीशुः प्रत्यु-
दितवान् योजनो मयि प्रीयते स ममाज्ञामपि गृह्णाति तेन मम पितापि
२४ तस्मिन् प्रेष्यते वयञ्च तन्निकटमागत्य तेन सह निवत्स्यामः। अपरञ्च यो
जनो मयि न प्रीयते स मम कथामपि न गृह्णाति पुनश्च यामिमां कथां
यूयं शृणुथ सा कथा केवलस्य मम न किन्तु मम प्रेरको यः पिता तस्यापि
कथा।

२५ इदानीं युष्माकं निकटे विद्यमानोहम् एताः सकलाः कथाः कथयामि;
२६ किन्त्वितः परं पित्रा प्रबोधयितरि, अर्थात् पवित्रआत्मनि मम नाम्नि
प्रेरिते स सर्व्वं शिक्षयित्वा मयोक्ताः समस्ताः कथा युष्मान् स्मारयिष्यति।
२७ अहं युष्माकं निकटे शान्तिं स्थापयित्वा यामि निजां शान्तिं युष्मभ्यं
ददामि जगतो लोका यथा ददति तथाहं न ददामि; युष्माकम् अन्तः-
२८ करणानि दुःखितानि भीतानि च न भवन्तु। अहं गत्वा पुनरपि युष्माकं
समीपम् आगमिष्यामि मयोक्तं वाक्यमिदं यूयम् अश्रौष्ट; यदि मय्यप्रे-
ष्यध्वं तर्हि पितुः समीपं गत्वा ममास्यां कथायां यूयम् आह्लादिष्यध्वं
२९ यतो मम पिता मत्तोपि महान्। अपरञ्च तस्या घटनायाःसमये यथा
युष्माकं श्रद्धा जायते तदर्थम् अहम् तस्या घटनायाः पूर्व्वम् इदानीं
३० युष्मान् एतां वार्त्तां वदामि। इतःपरं युष्माभिः सह मम बहव आलापा
न भविष्यन्ति यतः कारणाद् एतस्य जगतः पतिरागच्छति किन्तु मया
३१ सह तस्य कोपि सम्बन्धो नास्ति। अहं पितरि प्रेम करोमि तथा विधिवत
पितुः कर्म्म करोमि येन कर्म्मणा जगतो लोका इदं जानन्ति तादृशं
कर्म्माहं करोमि; उत्तिष्ठत स्थानादस्माद् गच्छामः।

### १५ पञ्चदशोऽध्यायः।

१ स्वस्य द्राक्षालतास्वरूपत्वदर्शनं शिष्यगणस्य शाखारूपत्वदर्शनं ८ तेषामनेकफल-फलनावश्यकता १७ तेषां भाविताडनाद्यान्वयोः प्रकटनञ्च।

अहं सत्यद्राक्षालतास्वरूपो मम पिता तूद्यानपरिचारकस्वरूपश्च। १
मम यासु शाखासु फलानि न भवन्ति ताः स छिनत्ति तथा फलवत्यः २
शाखा यथाधिकफलानि फलन्ति तदर्थं ताः परिष्करोति। इदानीं ३
मयोक्तोपदेशेन यूयं परिष्कृताः। अतः कारणान् मयि तिष्ठत तेनाहमपि ४
युष्मासु तिष्ठामि यतोहेतोः पादपेऽसंलग्ना शाखा यथा फलवती भवितुं न
शक्नोति तथा यूयमपि मय्यतिष्ठन्तः फलवन्तो भवितुं न शक्नुथ। अहं ५
द्राक्षालतास्वरूपो यूयञ्च शाखास्वरूपाः; यो जनो मयि तिष्ठति यत्र
चाहं तिष्ठामि स प्रचुरफलैः फलवान् भवति किन्तु मां विना यूयं किमपि
कर्त्तुं न शक्नुथ। यः कश्चिन् मयि न तिष्ठति स शुष्कशाखेव बहिर्निक्षि- ६
प्यते लोकाश्च ता आहृत्य वह्नौ निक्षिप्य दाहयन्ति। यदि यूयं मयि तिष्ठथ ७
मम कथा च युष्मासु तिष्ठति तर्हि यद् वाञ्छित्वा याचिष्यध्वे युष्माकं
तदेव सफलं भविष्यति।

अपरञ्च यदि यूयं प्रचुरफलवन्तो भवथ तर्हि तद्द्वारा मम पितु ८
र्महिमा प्रकाशिष्यते तथा यूयं मम शिष्या इति परिचायिष्यध्वे। पिता ९
यथा मयि प्रीतवान् अहमपि युष्मासु तथा प्रीतवान् अतोहेतो र्यूयं
निरन्तरं मम प्रेमपात्राणि भूत्वा तिष्ठत। यदि ममाज्ञा गृह्लीथ तर्हि १०
पितुराज्ञा गृहीत्वा यथाहं तस्य प्रेमभाजनमस्मि तथैव यूयमपि
मम प्रेमभाजनानि भविष्यथ। युष्मन्निमित्तं मम य आह्लादः स यथा ११
चिरं तिष्ठति युष्माकम् आनन्दश्च यथा पूर्य्येत तदर्थं युष्मभ्यम् एताः
कथा अचकथम्। अहं युष्मासु यथा प्रीये यूयमपि परस्परं तथा प्रीयध्वम् १२
एषा ममाज्ञा। मित्राणां कारणात् स्वप्राणदानपर्य्यन्तं यत् प्रेम तस्मान् महा- १३
प्रेम कस्यापि नास्ति। अहं यद्यद् आदिशामि तान्येव यदि यूयम् आचरत १४
तर्हि यूयमेव मम मित्राणि। अद्यारभ्य युष्मान् दासान् न वदिष्यामि यतः १५
प्रभु र्यत् करोति दासस्तन् न जानाति; किन्तु पितुः समीपे यद्यद्

अतएव तत् सर्व्वं युष्मान् अज्ञापयम् तत्कारणाद् युष्मान् मित्राणि प्रोक्त-
१६ वान्। यूयं मां मनोनीतं कृतवन्त इति न किन्त्वहमेव युष्मान् मनोनी-
तान् अकरवम् अपरञ्च यूयं गत्वा यथा फलान्युत्पादयथ तानि फलानि
चाक्षयाणि भवन्ति तदर्थं युष्मान् न्ययुञ्जि तस्मान् मम नाम प्रोच्य पितरं
यत् किञ्चन याचिष्यध्वे तदेव स युष्मभ्यं दास्यति।
१७ यूयं परस्परं प्रीयध्वम् अहम् इत्याज्ञापयामि। जगतो लोकै र्युष्मासु ऋती-
१८ यितेषु ते पूर्व्वं मामेव ऋतीयन्त इति यूयं जानीत। यदि यूयं जगतो
लोका अभविष्यत तर्हि जगतो लोका युष्मान् आत्मीयान् बुद्ध्वाप्रेष्यन्त।
१९ किन्तु यूयं जगतो लोका न भवथ, अहं युष्मान् अस्माज्जगतो मनोनीतान्
२० अकार्षम् एतस्मात् कारणाज् जगतो लोका युष्मान् ऋतीयन्ते। दासः
प्रभो र्महान् न भवति ममैतत् पूर्व्वीयं वाक्यं स्मरत; ते यदि मामेवा-
ताडयन् तर्हि युष्मानपि ताडयिष्यन्ति यदि मम वाक्यं गृह्लन्ति तर्हि
२१ युष्माकमपि वाक्यं ग्रहीष्यन्ति। किन्तु ते मम नामकारणाद् युष्मान् प्रति
तादृशं व्यवहरिष्यन्ति यतो यो मां प्रेरितवान् तं ते न जानन्ति।
२२ तेषां सन्निधिम् आगत्य यद्यहं कामपि कथां नाकथयिष्यं तर्हि तेषां
पापं नाभविष्यत् किन्त्वधुना तेषां पापमाच्छादयितुम् उपायो नास्ति।
२३ यो जनो माम् ऋतीयते स मम पितरमपि ऋतीयते। यत् कर्म्म
२४ केनापि कदापि नाक्रियत तादृशं कर्म्म यदि तेषां साक्षाद् अहं नाक-
रिष्यं तर्हि पापं नाभविष्यत् किन्त्वधुना मां मम पितरञ्च दृष्ट्वापि
२५ ऋतीयन्ते। तस्मात् तेऽकारणं माम् ऋतीयन्ते यदेतद् वचनं तेषां शास्त्रे
२६ लिखितमास्ते तत् सफलम् अभवत्। किन्तु पितु र्निर्गतं यं प्रबोधयिता-
रम् अर्थात् सत्यमयम् आत्मानम् पितुः समीपाद् युष्माकं समीपे प्रेषयि-
२७ ष्यामि स आगत्य मयि प्रमाणं दास्यति। अपरञ्च प्रथममारभ्य मया सार्द्धं
तिष्ठथ तस्माद्धेतो र्यूयमपि प्रमाणं दास्यथ।

## १६ षोडशोऽध्यायः।

१ ख्रीष्टस्य प्रस्थानं प्रबोधयितुरागमनं जगज्जनान् प्रति तत्कर्म्मप्रकाशनं १२ शिष्यान् प्रति तस्य कर्म्म १६ तस्य प्रस्थानकथायाः शिष्याणामबोध्यता २५ तत्कथाया बोध्यत्वकरणञ्च।

युष्माकं यथा बाधा न जायते तदर्थं युष्मान् एतानि सर्व्ववाक्यानि १
व्याहरम्। लोका युष्मान् भजनगृहाद् दूरीकरिष्यन्ति तथा यस्मिन् २
समये युष्मान् हत्वा ईश्वरस्य तुष्टिजनकं कर्म्माकुर्म्म इति ज्ञास्यन्ति
स समय आगच्छति। ते युष्मान् प्रतीदृशम् आचरिष्यन्ति यतस्ते ३
पितरं माञ्च न जानन्ति। अतोहेतोः समये समुपस्थिते यथा मम ४
कथा युष्माकं मनःसु समुपतिष्ठति तदर्थं युष्मभ्यम् एतां कथां कथयामि
युष्माभिः सार्द्धम् अहं तिष्ठन् प्रथमम् तां युष्मभ्यं नाकथयं। साम्प्रतं स्वस्य ५
प्रेरयितुः समीपं गच्छामि तथापि त्वं क्व गच्छसि कथामेतां युष्माकं
कोपि मां न पृच्छति। किन्तु मयोक्ताभिराभिः कथाभि र्युष्माकम् ६
अन्तःकरणानि दुःखेन पूर्णानि भवन्ति। तथाप्यहं यथार्थं कथयामि ७
युष्माकं हितार्थं मम गमनम् अवश्यकर्त्तव्यं यतोहेतो र्गमने न कृते प्रबोध-
यिता युष्माकं समीपं नागमिष्यति किन्तु यदि गच्छामि तर्हि युष्माकं
समीपे तं प्रेषयिष्यामि। ततः स आगत्य पापपुण्यदण्डेषु जगतो लोकानां ८
प्रबोधं जनयिष्यति। ते मयि न विश्वसन्ति तस्माद्धेतोः पापे प्रबोधं ९
जनयिष्यति। युष्माकम् अदृश्यः सन्नहं पितुः समीपं गच्छामि तस्मात् १०
पुण्ये प्रबोधं जनयिष्यति। एतज्जगतोऽधिपति र्दण्डाज्ञां प्राप्नोति तस्मात् ११
दण्डे प्रबोधं जनयिष्यति।

युष्मभ्यं कथयितुं ममानेकाः कथा आसते ताः कथा इदानीं यूयं १२
सोढुं न शक्नुथ; किन्तु सत्यमय आत्मा यदा समागमिष्यति तदा १३
सर्व्वं सत्यं युष्मान् नेष्यति स स्वतः किमपि न वदिष्यति किन्तु
यच्छ्रोष्यति तदेव कथयित्वा भाविकार्य्यं युष्मान् ज्ञापयिष्यति। मम १४
महिमानं प्रकाशयिष्यति यतो मम कार्य्यं गृहीत्वा युष्मान् बोधयिष्यति।

१५ पितु र्यद्यद् आस्ते तत् सर्व्वं मम तस्मात् कारणाद् अवादिषं स मम कार्य्यं
गृहीत्वा युष्मान् बोधयिष्यति।
१६ अपरञ्च कियत्कालात् परं यूयं मां द्रष्टुं न लप्स्यध्वे किन्तु तस्य
१७ कियत्कालात् परं पुन र्द्रष्टुं लप्स्यध्वे यतोहं पितुः समीपं गच्छामि। ततः
शिष्याणां कियन्तो जनाः परस्परं वदितुम् आरभन्त कियत्कालात् परं
मां द्रष्टुं न लप्स्यध्वे किन्तु ततः कियत्कालात् परं पुन र्द्रष्टुं लप्स्यध्वे यतोहं
१८ पितुः समीपं गच्छामि। इति यद् वाक्यम् अयं वदति तत् किं? ते प्रत्यव-
दन् कियत्कालात् परम् इति तस्य वाक्यं किं? तस्य वाक्यस्याभिप्रायं वयं बोद्धुं
१९ न शक्नुमः। तदा यीशुस्तेषां प्रश्नेच्छां ज्ञात्वा तेभ्योऽकथयत् कियत्कालात्
परं मां द्रष्टुं न लप्स्यध्वे किन्तु ततः कियत्कालात् परं पुन र्द्रष्टुं लप्स्यध्वे
२० यामिमां कथामकथयं तस्याभिप्रायं किं यूयं परस्परं मृगयध्वे? युष्मानहं
अतियथार्थं वदामि यूयं क्रन्दिष्यथ विलपिष्यथ च किन्तु जगतो लोका
आनन्दिष्यन्ति यूयं शोकाकुला भविष्यथ किन्तु शोकात् परं आनन्द-
२१ युक्ता भविष्यथ। प्रसवकाल उपस्थिते नारी यथा प्रसववेदनया व्याकुला
भवति किन्तु पुत्रे भूमिष्ठे सत्येवाहं पुत्रं प्रासोषीत्यानन्दात् तस्यास्तत्सर्व्वं
२२ दुःखं मनसि न तिष्ठति। तथा यूयमपि साम्प्रतं शोकाकुला भवथ किन्तु
पुनरपि युष्मभ्यं दर्शनं दास्यामि तेन युष्माकम् अन्तःकरणानि सानन्दानि
२३ भविष्यन्ति युष्माकं तम् आनन्दञ्च कोपि हर्त्तुं न शक्ष्यति। अपरञ्च
तस्मिन् दिवसे कामपि कथां मां न प्रक्ष्यथ युष्मानहम् अतियथार्थं
वदामि मम नाम्ना यत् किञ्चित् पितरं याचिष्यध्वे तदेव स दास्यति।
२४ पूर्व्वं मम नाम्ना किमपि नायाचध्वे याचध्वं ततः प्राप्स्यथ तस्माद्
युष्माकं सम्पूर्णानन्दो जनिष्यते।
२५ उपमाकथाभिः सर्व्वाण्येतानि युष्मान् ज्ञापितवान् किन्तु यस्मिन्
समये उपमया नोक्त्वा पितुः कथां स्पष्टं ज्ञापयिष्यामि समय एतादृश
२६ आगच्छति। तदा मम नाम्ना प्रार्थयिष्यध्वे ऽहं युष्मन्निमित्तं पितरं
२७ विनेष्ये कथामिमां न वदामि; यतो यूयं मयि प्रेम कुरुथ तथाहम् ईश्वरस्य

समीपाद् आगतवान् इत्यपि प्रतीथ तस्मात् कारणात् पिता स्वयं युष्मासु
प्रीयते। पितुः समीपाज् जगद् आगतोस्मि जगत् परित्यज्य च पुनरपि २८
पितुः समीपं गच्छामि। तदा शिष्या अवदन् हे प्रभो भवान् उपमया नोक्ता- २९
धुना स्पष्टं वदति। भवान् सर्व्वज्ञः कमपि किमपि प्रष्टुं तव प्रयोजनं नास्ति ३०
चेत्यधुनास्माकं स्थिरज्ञानं जातं तस्माद् भवान् ईश्वरस्य समीपाद् आगत-
वान् इत्यत्र वयं विश्वसिमः। ततो यीशुः प्रत्यवादीद् इदानीं किं यूयं ३१
विश्वसिथ? पश्यत सर्व्वे यूयं विकीर्णाः सन्तो माम् एकाकिनं परित्यज्य ३२
स्वं स्वं गृहं गमिष्यथ एतादृशः समय आगच्छति वरं प्रायेणोपस्थितवान्
तथाप्यहं नैकाकी भवामि यतः पिता मया सार्द्धम् आस्ते। यथा मया ३३
युष्माकं शान्ति र्जायते तदर्थम् एताः कथा युष्मभ्यम् अचकथम्;
अस्मिन् जगति युष्माकं क्लेशो घटिष्यते तथापि साहसं कुरुत यतो मया
जगज्जितं।

---

१७ सप्तदशोऽध्यायः।

१ खीष्टस्य पितरि प्रार्थनं ६ द्वादशशिष्यार्थं प्रार्थना २० सर्व्वशिष्याणामनन्त-सुखार्थं प्रार्थना च।

ततःपरं यीशुरेताः कथाः कथयित्वा स्वर्गं विलोक्य एतत् प्रार्थयत १
हे पितः समय उपस्थितवान्; यथा तव पुत्रस्तव महिमानं प्रकाशयति २
तदर्थं त्वं निजपुत्रस्य महिमानं प्रकाशय। अपरञ्च त्वं याल्लोकान् तस्य
हस्ते समर्पितवान् स यथा तेभ्योऽनन्तायु र्ददाति तदर्थं त्वं प्राणिमात्राणाम्
अधिपतित्वभारं तस्मै दत्तवान्। अपरञ्च यस्त्वम् अद्वितीयः सत्य ईश्वर- ३
स्त्वया प्रेरितश्च यीशुः खीष्ट एतयोरुभयोः परिचये प्राप्ते ऽनन्तायु
र्भवति। मह्यं यस्य कर्म्मणो भारं दत्तवान् तं सम्पन्नं कृत्वा जगत्यस्मिन् ४
तव महिमानं प्राकाशयम्। अतएव हे पित र्जगत्यविद्यमाने त्वया सह ५
तिष्ठतो मम यो महिमासीत् सम्प्रति तव समीपे मां तं महिमानं प्रापय।
अन्यच्च त्वम् एतज्जगतो याल्लोकान् मह्यम् अददा अहं तेभ्यस्तव नाम्न ६
स्तत्त्वज्ञानम् अददाम्। ते तवैवासन् त्वं तान् मह्यमददाः तस्मात्ते तवोपदे- ७

श्चम् अगृह्लन् त्वं मह्यं यत् किञ्चिद् अददाः तत्सर्व्वं त्वत्तो जायते, इत्य-
८ धुनाजानन्। अपरञ्च मां यदुपादिशः, अहमपि तान् तदुपादिशम् तथा
तेपि तदगृह्लन् त्वत्तोहं निर्गत्य त्वया प्रेरितोभवम् अत्र च व्यश्वसन्।
९ तेषामेव निमित्तं प्रार्थयेऽहं जगतो लोकनिमित्तं न प्रार्थये किन्तु
यांल्लोकान् मह्यम् अददास्तेषामेव निमित्तं प्रार्थयेऽहं यतस्ते तवैवासते।
१० ये मम ते तव ये च तव ते मम तथा तै र्मम महिमा प्रकाश्यते।
११ साम्प्रतम् अस्मिन् जगति ममावस्थितेः शेषम् अभवद् अहं तव समीपं
गच्छामि किन्तु ते जगति स्थास्यन्ति; हे पवित्र पितरावयो र्यथैकत्व-
मास्ते तथा तेषामप्येकत्वं भवति तदर्थं यांल्लोकान् मह्यम् अददास्तान्
१२ स्वनाम्ना रक्ष। यावन्ति दिनानि जगत्यस्मिन् तैः सहाहमासं तावन्ति
दिनानि तान् तव नाम्नाहं रक्षितवान् यांल्लोकान् मह्यम् अददास्तान्
सर्व्वान् अहमरक्षं तेषां मध्ये केवलं विनाशपात्रं हारितं तेन धर्म्मपुस्तकस्य
१३ वचनं प्रत्यक्षं भवति। किन्त्वधुना तव सन्निधिं गच्छामि किञ्च मया यथा
तेषां सम्पूर्णानन्दो भवति तदर्थं जगति तिष्ठन् एताः कथा अकथयम्।
१४ तवोपदेशं तेभ्योऽददाम् अपरञ्च जगता सह यथा मम सम्बन्धो नास्ति तथा
१५ जगता सह तेषामपि सम्बन्धाभावात् जगतो लोकास्तान् ऋतीयन्ते। त्वं
जगतस्तान् गृहाणेति न प्रार्थये किन्त्वशुभाद् रक्षेति प्रार्थयेऽहम्।
१६ अहं यथा जगत्सम्बन्धीयो न भवामि तथा तेपि जगत्सम्बन्धीया न भव-
१७ न्ति। तव सत्यकथया तान् पवित्रीकुरु तव वाक्यमेव सत्यं। त्वं यथा मां
१८
१९ जगति प्रैरयः तथाहमपि तान् जगति प्रैरयम्। किञ्च तेषां हितार्थं
यथाहं स्वं पवित्रीकरोमि तथा सत्यकथया तेपि पवित्रीभवन्तु।
२० अपरञ्च केवलं तेषामर्थे प्रार्थयेऽहम् इति न किन्तु तेषामुपदेशेन ये
२१ जना मयि विश्वसिष्यन्ति तेषामप्यर्थे प्रार्थयेऽहम्। हे पितः सर्व्वेषां यथै-
कत्वं भवति तव यथा मयि मम च यथा त्वय्येकत्वं तथा तेषामपि अस्मा-
स्वेकत्वं भवतु तेन त्वं मां प्रेरितवान् इति जगतो लोकाः प्रतियन्तु।
२२ अपरञ्च यथावयोरेकत्वं तथा तेषामप्येकत्वं भवतु तेष्वहं मयि च त्वम्

इत्थं तेषां सम्पूर्णमेकत्वं भवतु; त्वं मां प्रेरितवान् त्वं मयि यथा २३
प्रीयसे च तथा तेष्वपि प्रीतवान् एतद्यथा जगतो लोका जानन्ति तदर्थं
त्वं यं महिमानं मह्यम् अददास्तं महिमानम् अहमपि तेभ्यो दत्तवान्।
हे पित र्जगतो निर्म्माणात् पूर्व्वं मयि स्नेहं कृत्वा यं महिमानं दत्तवान् २४
मम तं महिमानं यथा ते पश्यन्ति तदर्थं यांल्लोकान् मह्यं दत्तवान् अहं
यत्र स्थाने तिष्ठामि तेपि यथा तत्र स्थाने तिष्ठन्ति ममैषा वाञ्छा। हे २५
यार्थार्थिक पित र्जगतो लोकैस्त्वय्यज्ञातेपि त्वामहं जाने त्वं मां प्रेरित-
वान् इतीमे शिष्या जानन्ति। अपरञ्च यथाहं तेषु तिष्ठामि तथा मयि २६
येन प्रेम्ना प्रेमाकरोस्तत् तेषु तिष्ठति तदर्थं तव नामाहं तान् ज्ञापित-
वान् पुनरपि ज्ञापयिष्यामि।

---

१८ अष्टादशोध्यायः।

१ यीशोः परकरसमर्पितत्वं १२ महायाजकान्तिकं तस्य नयनं १५ तस्य पश्चात् पितरयोहनो र्गमनं १९ तस्य विचारितत्वं २५ तस्मिन् पितरस्यापह्नवः २८ पिलातसमीपं तस्य नयनं ३३ पिलातेन तस्य विचारितत्वञ्च।

तां कथां कथयित्वा यीशुः शिष्यानादाय किद्रोन्नामकं स्रोत १
उत्तीर्य्य शिष्यैः सह तत्रत्योद्यानं प्राविशत्। किन्तु विश्वासघातियिहूदा २
तत् स्थानं परिचीयते यतो यीशुः शिष्यैः सार्द्धं कदाचित् तत्स्थानम्
अगच्छत्। तदा स यिहूदाः सैन्यगणं याजकफिरूशिनां पदातिगणञ्च ३
गृहीत्वा प्रदीपान् उल्कान् अस्त्राणि चादाय तस्मिन् स्थान उपस्थितवान्।
स्वं प्रति यद् घटिष्यते तज् ज्ञात्वा यीशुरग्रेसरः सन् तानपृच्छत् कं ४
गवेषयथ? ते प्रत्यवदन् नासरीयं यीशुं ततो यीशुरवादीद् अहमेव ५
सः; तैः सह विश्वासघाती यिहूदास्तातिष्ठत्। तदाहमेव स तस्यैतां कथां ६
श्रुत्वैव ते पश्चादेत्य भूमौ पतिताः। ततो यीशुः पुनरपि पृष्टवान् कं गवेष- ७
यथ? ततस्ते प्रत्यवदन् नासरीयं यीशुं। तदा यीशुः प्रत्युदितवान् अहमेव स ८
इमां कथामचकथम्; यदि मामन्विच्छथ तर्हीमान् गन्तुं मा वारयत। इत्थं ९
भूते मह्यं यांल्लोकान् अददास्तेषाम् एकमपि नाहारयम् इमां यां कथां

१० स स्वयमकथयत् सा कथा सफला जाता। तदा शिमोन् पितरस्य निकटे
खड्गस्थितेः स तं निष्कोषं कृत्वा महायाजकस्य माल्खनामानं दासम्
११ आहत्य तस्य दक्षिणकर्णं छिन्नवान्। ततो यीशुः पितरम् अवदत् खड्गं कोषे
स्थापय मम पिता मह्यं पातुं यं कंसम् अददात् तेनाहं किं न पास्यामि।
१२ तदा सैन्यगणः सेनापति यिहूदीयानां पदातयश्च यीशुं धृत्वा बद्धा हना-
१३ नाम्नः कियफाः श्वशुरस्य समीपं प्रथमम् अनयन्। साधारणलोकानां
१४ मङ्गलार्थम् एकजनस्य मरणमुचितम् स कियफास्तस्मिन् वत्सरे महा-
याजकत्वपदे नियुक्तः सन् यिहूदीयैः सार्द्धम् इत्यमन्त्रयत्।
१५ तदा शिमोन् पितरोऽन्यैकशिष्यश्च यीशोः पश्चाद् अगच्छतां तस्यान्य-
शिष्यस्य महायाजकेन परिचितत्वात् स यीशुना सह महायाजकस्या-
१६ ट्टालिकां प्राविशत्। किन्तु पितरो बहिर्द्वारस्य समीपेऽतिष्ठद् अतएव
महायाजकेन परिचितः स शिष्यः पुनर्बहिर्गत्वा दौवारिकायै कथयित्वा
१७ पितरम् अभ्यन्तरम् आनयत्। तदा सा द्वाररक्षिका पितरम् अवदत् त्वं
१८ किं न तस्य मानवस्य शिष्यः? ततः सोवदद् अहं न भवामि। ततःपरं यत्र
स्थाने दासाः पदातयश्च शीतहेतोः पाषाणाङ्गारै र्वह्निं प्रज्वाल्य तापं सेवि-
तवन्तस्तत्र स्थाने पितरस्तिष्ठन् तैः सह वह्नितापं सेवितुम् आरभत।
१९ तदा शिष्येषूपदेशे च महायाजकेन यीशुः पृष्टः सन् प्रत्युक्तवान्
२० सर्व्वलोकानां समक्षं कथामकथयं गुप्तं कामपि कथां न कथयित्वा यत् स्थानं
२१ यिहूदीयाः सततं गच्छन्ति तत्र भजनगेहे मन्दिरे चाशिक्षयं; तस्मात्
कुतो मां पृच्छसि? ये जना मदुपदेशम् अशृण्वन् वरं तान् पृच्छ यद्यद् अवदं
२२ ते तज् जानन्ति। तदेत्थं प्रत्युदितत्वात् निकटस्थपदाति र्यीशुं चपेटेनाहत्य
२३ व्याहरत् महायाजकम् एवं प्रतिवदसि? ततो यीशुः प्रतिगदितवान्
यद्ययथार्थम् अचकथं तर्हि तस्यायथार्थस्य प्रमाणं देहि किन्तु यदि
२४ यथार्थं तर्हि कुतोहेतो र्माम् अताडयः? पूर्व्वं हनान् सबन्धनं तं कियफा-
महायाजकस्य समीपं प्रति प्रैषयत्।
२५ शिमोन् पितरस्तिष्ठन् वह्नितापं सेवते, एतस्मिन् समये कियन्तस्तम्

अपृच्छन् त्वम् न किम् एतस्य जनस्य शिष्यः? ततः सोपह्नुत्याब्रवीद् अहं न
भवामि। तदा महायाजकस्य यस्य दासस्य पितरः कर्णमच्छिनत् तस्य २६
कुटुम्बः प्रत्युदितवान् उद्याने तेन सह तिष्ठन्तं त्वां किं नापश्यं? किन्तु २७
पितरः पुनरपह्नुत्य कथितवान्; तदानीं कुक्कुटोऽरौत्।

तदनन्तरं प्रत्यूषे ते कियफागृहाद् अधिपतेर्गृहं यीशुम् अनयन् २८
किन्तु चेद् अशुचौ सति निस्तारोत्सवे भोजनं न क्रियते तस्माद् यिहू-
दीयास्तद्गृहं नाविशन्। अपरं पिलातो वहिरागत्य तान् पृष्टवान् एतस्य २९
मनुष्यस्य कं दोषं वदथ? तदा ते प्रत्यवदन् दुष्कर्म्मकारिणि न सति भवतः ३०
समीपे नैनं समार्पयाम। ततः पिलातोवदद् एनं गृहीत्वा स्वेषां व्यव- ३१
स्थया विचारयत। तदा यिहूदीयाः प्रत्यवदन् कस्यापि मनुष्यस्य प्राण-
दण्डं कर्त्तुं नास्माकम् अधिकारोस्ति। एवं सति यीशुः स्वस्य मृत्यौ यां ३२
कथां कथितवान् सा सफलाभवत्।

तदनन्तरं पिलातः पुनरपि तद् राजगृहं गत्वा यीशुमाहूय पृष्ट- ३३
वान् त्वं किं यिहूदीयानां राजा? यीशुः प्रत्यवदत् त्वम् एतां कथां स्वतः ३४
कथयसि किमन्यः कश्चिन् मयि कथितवान्? पिलातोवदद् अहं किं ३५
यिहूदीयः? तव स्वदेशीया विशेषतः प्रधानयाजका मम निकटे त्वां समा-
र्पयन् त्वं किं कृतवान्? यीशुः प्रत्यवदन् मम राज्यम् एतज्जगत्सम्बन्धीयं न ३६
भवति यदि मम राज्यं जगत्सम्बन्धीयम् अभविष्यत् तर्हि यिहूदीयानां
हस्तेषु यथा समर्पितो नाभवं तदर्थं मम सेवका अयोत्स्यन् किन्तु मम
राज्यम् ऐहिकं न। तदा पिलातः कथितवान् तर्हि त्वं राजा भवसि? ३७
यीशुः प्रत्युक्तवान् त्वं सत्यं कथयसि राजाहं भवामि; सत्यतायां साक्ष्यं
दातुं जनिं गृहीत्वा जगत्यस्मिन् अवतीर्णवान् तस्मात् सत्यधर्म्मपक्षपातिनो
मम कथां शृण्वन्ति। तदा सत्यं किम् एतां कथां पृष्ट्वा पिलातः पुन- ३८
रपि वहिर्गत्वा यिहूदीयान् अभाषत, अहम् तस्य कमप्यपराधं न प्राप्नो-
मि। अपरञ्च निस्तारोत्सवसमये यं यूयं मनोनीतं कुरुथ सएव मोचयि- ३९
तव्य एषा युष्माकं रीतिरस्ति, अतएव युष्माकं निकटे यिहूदीयानां